**Government Oriental Library Series.**

*Edited by Pandits under the supervision of the Curator, Government Oriental Library, Mysore.*

BIBLIOTHECA SANSKRITA—No. 28.

# कृष्णयजुर्वेदीयः

# एकाग्निकाण्डः.

## हरदत्तमिश्रविरचितव्याख्यासहितः.



THE

# EKAGNIKÁNDA

OF THE

## KRISHNA-YAJUR-VEDA

WITH THE

COMMENTARY OF HARADATTAMIŚRA.

EDITED BY

L. SRÎNIVÂSÂCHÂRYA,

*Assistant Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1902.

# एकाग्निकाण्डोपोद्घातः.

इदं खल्वेकाग्निकाण्डं नाम मन्त्रप्रपाठकापरपर्यायं प्रपाठकद्वयविभक्तं गृह्यकर्मसु विनियुक्तानां मन्त्राणां कदम्बकम् ॥

तच्चेदमेकाग्निकाण्डमशीतिद्वयमिति प्रसिद्धे यजुश्शाखाम्नायेऽन्तर्भूतम् । यथा—अस्यां शाखायां संहिताख्यातेषु सप्तकाण्डेषु प्रपाठकाः [४४], ब्राह्मणस्य काण्डत्रयसम्मितस्य [२९], काठकस्य [३], आरण्यकस्य [८], मन्त्रप्रपाठकौ [२] । आहत्य [८२] द्व्यधिकाशीतिसंख्या प्रपाठकानाम् ॥

यद्यप्यत्र केचित् माधवीयवेदभाष्यानुसारेण त्रिवल्लीं तैत्तिरीयोपनिषदं प्रपाठकत्रयवतीं मत्वा आरण्यकस्य (१०) दशप्रपाठका इति मन्त्रप्रपाठकद्वयायोजनेनाप्यशीतिद्वयत्वमुपपादयन्ति । तथाऽपि भट्टभास्करादिविरचितभाष्यानुसारेण त्रिवल्ल्या अपि तैत्तिरीयोपनिषदः एकप्रपाठकत्वस्यैवावगमात् मन्त्रप्रपाठकद्वययोगमन्तरेणाशीतिद्वयत्वमनुपपन्नमेव स्यादित्येकाग्निकाण्डस्यात्रान्तर्भाव आवश्यक एव । अत एव भट्टभास्करभाष्योपोद्घातोदाहृतकाण्डानुक्रमण्यां 'अथैकाग्निकाण्डं प्रसुग्मन्तेत्यग्निकाण्डस्थवैश्वदेवमन्त्राश्च । तस्य विश्वेदेवा ऋषयः' इत्यभिधानं संगच्छते ॥

किंच—माधवीयादिषु क्वचिदप्यशीतिद्वयमित्यनभिधानात् यजुराम्नायस्याशीतिचतुष्टयत्वमेव तन्मतेनास्थेयमित्युन्नेतुं साम्प्रतम् । काण्डानुक्रमणीसमधिगताम्नायान्तःपातस्यैकाग्निकाण्डस्याम्नायानन्तःपातवाचोयुक्तेरयुक्तत्वात् ॥

एतेन—द्वात्रिंशत्प्रश्नसंमिते आपस्तम्बीयकल्पसूत्रे अन्तिमावेतौ द्वौ प्रश्नौ. तत्रापस्तम्बः क्रमविशेषेण योजयिता तत्रतत्रखिलानामखिलानां वा मन्त्राणाम् । तथा योजनं च स्वीयगृह्यसूत्रे क्रमविशेषमादृत्य सुखप्रतिपत्तयेऽस्मादृशाम् । अत एव गृह्यसूत्रे 'पूर्वया, उत्तरया' इत्यादिः सुकरो व्यवहारः । तत्र कल्पसूत्रेषु द्वात्रिंशत्प्रश्नेषु—

| | | | |
|---|---|---|---|
| दर्शपूर्णमासौ. | ४रः प्रश्नाः. | चयनम्. | १६—१७ प्रश्नौ. |
| अग्न्याधेयम् | ५मः ,, | वाजपेयः | १८शः ,, |
| अग्निहोत्रम्. | ६ष्ठः ,, | सौत्रामणिः | १९शः ,, |
| निरूढपशुबन्धः | ७मः ,, | अश्वमेधः. | २०शः ,, |
| चातुर्मास्यम् | ८मः ,, | द्वादशाहः. | २१शः ,, |
| प्रायश्चित्तम्. | ९मः ,, | एकाहः. | २२शः ,, |
| अग्निष्टोमः. | १०—१३ ,, | सत्रम्. | २३शः ,, |
| उक्थ्यषोडश्यतिरात्राप्तोर्यामैकादशिनचातुर्होत्रादीनि, सोमप्रायश्चित्तं च. | १४शः ,, | परिभाषाप्रवरौ. | २४शः ,, |
| | | शुल्बम्. | २५शः ,, |
| | | पैतृमेधिकम्. | २६—२७ ,, |
| | | गृह्यम्. | २८शः ,, |
| | | धर्मः. | २९—३० ,, |
| प्रवर्ग्यम्. | १५शः ,, | मन्त्रप्रपाठकौ | ३१—३२ ,, |

आहत्य द्वात्रिंशत्प्रश्ना इति केषांचित् गतानुगतिकोक्तिरयुक्तेति व्यक्तीकृतम् ॥

आपस्तम्बेन तदितरेण भाष्यकारेण वा येन केन चित् कल्पसूत्रं द्वात्रिंशत्प्रश्नपरिमितमित्यनभिधानात् त्रिंशत्प्रश्नपरिमितत्वेऽ-

पि कल्पसूत्रस्यापस्तम्बीयस्य विरोधलेशविरहात् । किंच—बोधायनाश्वलायनादिकल्पसूत्रेषु तत्तन्मन्त्रभागस्य अन्तर्भावशङ्काया एवानवकाशात् प्रकृते तदन्तर्भावकथनं कल्पसूत्रकारशैलीविरुद्धम्। किंच—यदि मन्त्राणामापस्तम्बः कर्ता योजयिता वाऽभविष्यत् विवाहादिसंकीर्णक्रमं विहाय गर्भाधानादिक्रमेणैव मन्त्रान् अकरिष्यदयोजयिष्यद्वा । तस्मादनादिनिधनाविच्छिन्नसंप्रदायसिद्धपाठमनुरुद्ध्यैव सूत्राणि सूत्रयामासेत्यनुमन्वते मीमांसकाः ॥

अपि च गृह्यसूत्रे चतुर्थपटले दशमखण्डे—'कुमारं भोजयित्वाऽनुवाकस्य प्रथमेन यजुषा' इति सूत्रव्याख्याने तात्पर्यदर्शने 'अत्रानुवाकग्रहणं गृह्यमन्त्रास्समाम्नाता एव न कल्पसूत्रस्था इति ज्ञापनार्थम् । तत्प्रयोजनं च एते ब्रह्मयज्ञादिष्वध्येतव्या इत्युक्तम्' इति व्याचक्षाणैस्सुदर्शनाचार्यैरेवायं विवादः पराकृत इत्यलमधिकेन ॥

तस्यैतस्यैकाग्निकाण्डस्य माधवीयं भट्टभास्करीयं वा भाष्यं नाद्याप्यलभ्यत. किन्तु हरदत्तकृतमेव सर्वत्रोपलभ्यते इति तेन सहैव काण्डमिदं सममुद्रि । भट्टभास्करेणास्य काण्डस्य भाष्यं व्यधायीत्यत्र तु नान्यथा प्रतिपत्तव्यम् । यतः खल्वयं पितृमेधभाष्ये 'माता रुद्राणाम्' इति मन्त्रं प्रकृत्य 'मातेत्याद्युत्सृजतेत्यन्तं मधुपर्के गतम्' इति बभाषे. स च मधुपर्कमन्त्रोऽस्मिन्नेवैकाग्निकाण्डे आम्नायते नान्यत्रेति । अयं चापरो विशेषोऽस्माद्भट्टभास्करभाष्यवाक्यादुन्नीयते. यदेकाग्निकाण्डमारण्यकात्प्रागेव भाषितं आम्नातं चेति अध्येतृभिरपि तथैवाध्येतव्यमिति च ॥

संभाव्यते चेदं हरदत्तभाष्यं भट्टभास्करभाष्यादनतिभेदमेव भवेदिति. यतः पितृमेधप्रपाठकस्य हरदत्तभाष्यं भट्टभास्करभाष्यादनतिभेदमेव कस्मिंश्चित्प्रतनकोशेऽस्माभिरुपलभ्यते । होळेनरसीपुरादानीते उत्तरादिमठीयकोशागारस्थिते देवनागराक्षरमये तैत्तिरीयारण्यकभट्टभास्करभाष्यस्य प्रत्नतमे कोशे (९८) पत्रे "इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये तृतीयप्रपाठकस्समाप्तः" इत्येतदनन्तरं—

**प्रणिपत्य महादेवं हरदत्तेन धीमता ।**
**पैतृमेधिकमन्त्राणां व्याख्यानं क्रियतेऽधुना ॥**

इत्युपक्रम्य पैतृमेधिकमन्त्रभाष्यं लिखितं दृश्यते । तच्च प्रायो भट्टभास्करीयभाष्यादनतिभेदमेव (११६) पत्रान्तं पञ्चमानुवाकीयत्रयोदशमन्त्रभाष्यपर्यन्तमुपलभ्यते । तदनन्तरं च पत्रलोपः उपनिषद्भाष्यारम्भं यावत् ॥

दृश्यमानं चेदमेकाग्निकाण्डभाष्यं हरदत्तस्यैवेत्यत्र तु न सन्देग्धव्यम् । आदौ 'प्रणिपत्य....विधीयते' इति पद्यदर्शनात् । माधवीयधातुवृत्तितोऽपि चायमर्थो निर्धार्यते । यतस्तत्र धातुवृत्तौ तुदादौ पिशधातौ "अयं दीपनायामपि वर्तते । तथाच 'त्वष्टा रूपाणि पिंशतु' (१–१३) इत्यत्र हरदत्तः—पिंशतिर्दीप्तिकर्मा 'नक्षत्रेभिः पितरो द्यामपिंशन्' इत्यत्र दर्शनात्" इत्येवमेतदेकाग्निकाण्डभाष्यवाक्यमुदाहृतम् ॥

स चायं हरदत्तः आपस्तम्बीयश्रौतगृह्यधर्मसूत्राणां व्याख्यातैवेति न केवलं प्रतिपत्तव्यम् । किन्तु काशिकावृत्तिव्याख्यारूपपदमञ्जरीकारोऽपीति । 'प्लावनं च नाम्नः' इति धर्मसूत्रोज्ज्वलायाः 'प्रत्यभिवादे शूद्रे' इति सूत्रपदमञ्जर्याश्च प्रत्यभिवादीयाभिधानावसानपृथगकारप्रयोगव्यवस्थापनरूपासाधारणार्थैककण्ठ्यात् ॥

समयं पुनरस्य हरदत्तस्य विशिष्य न निर्धारयितुं पारयामः। सामान्यतस्तु वेदभाष्यधातुवृत्त्यादिनिर्मातृसायणमाधवार्यात् पुरस्तात् मेधातिथेः मनुभाष्याख्यप्रथितमनुस्मृतिव्याख्याकर्तुः परस्तादित्येवं निर्धारयामः। यतोऽसौ परिभाषासूत्रव्याख्यायां हरदत्तकृतायां द्वितीयखण्डे (३३) सूत्रे—'अयं चार्थो दर्शितो मनुभाष्यकारेण—अधिकारान्तरं पुनर्दारक्रियायां न पुनः पूर्वाधिकारप्रसङ्ग इति' इति मनुभाष्यं निर्दिशति ॥

अस्मिंश्चैकाग्निकाण्डे तत्रतत्र मन्त्रविभागे विनियोगे च विवादो दृश्यते। स च तात्पर्यदर्शनादिषु विस्तृतः। इह तु विनियोगमात्रे मतान्तरं व्याख्यातैव हरदत्तमिश्रस्तत्रतत्र प्रदर्शयिष्यति ॥

तस्यैतस्य सभाष्यस्यैकाग्निकाण्डस्य शोधनसमये आदर्शीकृताः कोशाः—

१ मदरास् नगरे मुद्रितः आन्ध्राक्षरमयः कोशः.
२ तंजावूरुजिल्ला कदिरमंगलं सुब्रह्मण्यशास्त्रिणां ताळपत्रकोशः.
३. मैसूरु शुद्दसामिश्रोतिनां ताळपत्रकोशः.
४ S. वेंकटरामशास्त्रिणां
५ मैसूरु अश्वत्थनरसिंहशास्त्रिणां कागदमयः कोशः
६—१० पर्यन्ताः पञ्च कोशाः अत्रैव कोशागारे संगृहीताः।

तत्र 137नं. आ. शुद्धः. 601. ग्र. 650. आ. 1039. आ. 1452. आ. नातिशुद्धा एते चत्वारः कोशाः. इत्येवं दश कोशानवलोक्य परिष्कृतोऽयं ग्रन्थ इति शम्.

---

# एकाग्निकाण्डविषयाः.

| | मन्त्रसं. | पुटसं. |
|---|---|---|
| वैश्वदेव–बलिहरणमन्त्राः | १–४ | १ |

ओं परमात्मने नमः.

# श्रीकृष्णयजुर्वेदे.

## एकाग्निकाण्डे प्रथमप्रपाठकप्रारम्भः.

[1]अदि॑तेऽनु॑ मन्यस्व । अनु॑मतेऽनु॑ मन्यस्व । सर॑स्वतेऽनु॑ मन्यस्व । देव॑ सवितः प्रसु॑व ॥

## अथ श्रीहरदत्तमिश्रविरचित-
## मन्त्रप्रपाठकव्याख्याप्रारम्भः.

प्रणिपत्य महादेवं हरदत्तेन धीमता ।
एकाग्निकाण्डमन्त्राणां व्याख्या सम्यग्विधीयते ॥

तत्राचार्यो आदितो वैश्वदेवमन्त्रानधीयते । तत्र चोक्तं 'उभयतः परिषेचनं यथा पुरस्तात्'* इति । तत्परिषेचनमन्त्राः पूर्वं व्याख्येयाः—

[1]अदितिर्नाम देवमाता हे अदिते! अनुमन्यस्व मया क्रियमाणं कर्म, अनुजानीहि । अनुमतिः अनुमन्त्री ऊनचन्द्रा पूर्णमासी हे अनुमते! अनुमन्यस्व । सरस्वती वाग्देवता, तस्यास्सम्बुद्धिः, हे सरस्वते! अनुमन्यस्व । सरस्वते इति छान्दसो गुणः । हे देव सवितः! सर्वस्यानुज्ञातः ! अस्मानपि प्रसुव अनुजानीहि ॥

* आप. ध. २-४-८.

[2]ओं अग्नये स्वाहा।सोमाय स्वाहा *। विश्वेभ्यो देवेभ्यस्स्वाहा।ध्रुवाय भूमाय स्वाहा ।ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा ॥

अदितेऽन्वमꣳस्थाः । अनुमतेऽन्वमꣳस्थाः । सरस्वतेऽन्वमꣳस्थाः । देव सवितः प्रासावीः ॥

---

[2]अथ **वैश्वदेवमन्त्राः**—'तेषां मन्त्राणामुपयोगे द्वादशाहमधश्शय्या'[1] इत्यादि। उपयोगः नियमपूर्वकं विद्याग्रहणम्। कर्तुरेव व्रतम्। पत्न्या अपि केचिदिच्छन्ति। **ओं अग्नये स्वाहा**। यथा ओं इत्यनुज्ञाक्षरं तथा स्वाहाकारो हविःप्रदानार्थः । **सोमाय स्वाहेति**। इमं मन्त्रं केचिन्नाधीयते । **विश्वेभ्यो देवेभ्यः** सर्वेभ्यो देवेभ्यः । **ध्रुवाय** एकरूपाय वृद्धिक्षयरहिताय । **भूम्ने** ब्रह्मणे 'भूमा त्वेव विजिज्ञासितव्यः'[2] इति छान्दोग्यम् । ध्रुवा निश्चला क्षितिर्गतिः व्याप्तिर्यस्य कार्यवर्गं प्रति तस्मै **ध्रुवक्षितये** ब्रह्मणे । एवं अच्युतक्षितये । एवमग्नये **स्विष्टकृते**। रुद्रोऽग्निस्स्विष्टकृत्, स्विष्टं सुहुतं करोतीति स्विष्टकृत् तस्मै ॥

[3]**पूर्ववत्परिषेचनम्**— अन्वमंस्थाः अनुज्ञातवती । **प्रासावीः** अनुज्ञातवान् ॥

---

[1]आप. ध. २-३-१३. [2]छा. ७-२३.

* सोमाय स्वाहेतिवाक्यं केचिन्नाधीयते.

[4]धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्यस्स्वाहा । ओषधिवनस्पतिभ्यस्स्वाहा । रक्षोदेवजनेभ्यस्स्वाहा । गृह्याभ्यस्स्वाहा । अवसानेभ्यस्स्वाहा । अवसानपतिभ्यस्स्वाहा । सर्वभूतेभ्यस्स्वाहा । कामाय स्वाहा । अन्तरिक्षाय स्वाहा । यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्यस्स्वाहा । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । स्वधा पितृभ्यस्स्वाहा । नमो रुद्राय पशुपतये स्वाहा । ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य

---

[4]अथ बलिहरणमन्त्राः—धर्माधर्मौ प्रसिद्धौ, आपश्च । एवमोषधिवनस्पतयश्च । अत्र तत्तदधिष्ठात्र्यो देवता गृह्यन्ते । **रक्षोदेवजनेभ्यः** रक्षसां देवानां च ये जनाः परिचारकाः तेभ्यः । **गृह्याभ्यः** गृहे भवाः गृह्याः देवताः वास्तुविद्याप्रसिद्धाः ताभ्यः । **अवसानेभ्यः** अवसानं गृहम्, अवयवापेक्षं बहुवचनम् । तत्तदधिष्ठानाभ्यो देवताभ्यः । **अवसानपतिभ्यः** अवसानरक्षितृभ्यः । सर्वाणि च तानि भूतानि च तेभ्यः । कामः प्रसिद्धः । एवमन्तरिक्षमपि । **यदेजति** येनापिधीयते द्वारं

**प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥**

**हरिः ओम्. [1]प्रसुग्मन्ता धियसानस्य सक्षणिं वरे-**

---

तदुच्यते । यद्वा—यत् अपिधानकाले कम्पते **जगति** लोके **यच्च चेष्टति** चेष्टते तस्य **नाम्नो** नमनशीलस्य **भागोऽयं** तस्मै **नाम्ने स्वाहा** । पृथिव्यादयः प्रसिद्धाः । यथा देवेभ्यस्स्वाहाकारः एवं पितृभ्यः स्वधाकारः । **नमो रुद्राय पशुपतये** पशवो द्विपादश्च-तुष्पादश्च तेषां पत्ये । **ये भूताः** यानि भूतानि **प्रचरन्ति** इत-स्ततः चरन्ति **दिवा नक्तं बलिमिच्छन्तः वितुदस्य** कुबेरपुत्रस्य 'वितुदये कौबेरकाय'* इति मन्त्रान्तरे दर्शनात् तस्य कुबेरपुत्रस्य† **ये प्रेष्याः तेभ्यः बलिं पुष्टिकामः हरामि** स **पुष्टिपतिः** वितुदः **मयि पुष्टिं दधातु** । अनेन नक्तमेव बलिः 'नक्तमे-वोत्तमेन वैहायसम्'‡ इति दर्शनात् 'नक्तं बलिमिच्छन्तः' इति लिङ्गाच्च । अन्ये तु—नक्तमुत्तमेनैवेति भिन्नक्रममेवकारस्याचक्षते, तेषां बल्यन्तराणां रात्रौ निवृत्तिः । केचित् 'दिवा बलिमिच्छ-न्तः' इत्यूहेन दिवा बलिं हरन्ति 'दिवा चारिभ्य इति दिवा, नक्तं चारिभ्य इति नक्तम्'§ इत्याश्वलायने दर्शनात् ॥

[1]**अथ विवाहमन्त्राः**—वरान् प्रहिताननुमन्त्रयते—**प्रसुग्मन्ता** इति ॥ **प्रसुग्मन्ताः** प्रकर्षेण सुष्ठु गन्तारः **धियसानस्य** ध्यायमा-

---

*आ. १-३१. †कुबेरपुरुषस्य. ‡आप. ध. २-४-८. §१-२-८.

भिर्वराः अभिषुप्रसीदत । अस्माकमिन्द्रं उभयं जुजोषति यत्सौम्य*स्यान्धसो बुबोधति।[2]अनृक्षरा ऋजवस्सन्तु पन्था येभिस्सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नो निनीयात्सं

---

नस्य सक्षणि समाने क्षणे व्यानानन्तरमेव वरेभिः वरैः श्रेष्ठैः पथिभिः वरान् वरयितव्यान् कन्यायाः पित्रादीन् अभि प्रति सुप्रसीदत सुष्ठु प्रकर्षेण गच्छत हे सुहृदः ! । इन्द्रोऽप्यत्र सहाय इत्याह— अस्माकमुभयम् । 'अस्मदो द्वयोश्च' इति द्वयोर्बहुवचनम् । मम च कन्यायाश्च आवयोर्योगं इन्द्रो जुजोषति सेवते तस्याप्येतदनुमतमित्यर्थः । कस्मात् ? यत् यस्मात्कारणात् सौम्यस्यान्धसः[1] अन्नस्य । द्वितीयार्थे षष्ठी । सोमरसात्मकमन्नं आवाभ्यां दास्यमानं बुबोधति एतौ सङ्गतौ मां यक्ष्येते इति बुध्यते ॥

[2]अनृक्षरा इति ॥ कन्यागृहं गच्छतां तेषां पन्थाः पन्थानः अनृक्षराः कण्टकशर्करादिरहिताः ऋजवश्च सन्तु, येभिः यैः पथिभिः नः अस्माकं सखायः सुहृदः इमे यन्ति गच्छन्ति वरेयं वरणीयं कन्यायाः पित्रादिकं प्रति । नः आवां च अर्यमा भगश्च संनिनीयात् संनयतु सङ्गमयतु । आवयोश्च जास्पत्यं जायापतिभावं सम्यक् सुयममस्तु सुसम्बद्धमस्तु हे देवाः! ॥

---

*यत्सोम्य.

[1]ओकारश्छान्दस इत्यधिकः पाठः तदा सोम्यस्येति मन्त्रपाठस्स्यात्.

जास्पत्य१ सुयमंमस्तु देवाः। [3]अभ्रातृघ्नीं वरुणापं-
तिघ्नीं बृहस्पते । इन्द्रापुत्रघ्नीं लक्ष्म्यं तामस्यै
संवितस्सुव। [4]अघोरचक्षुरपंतिघ्न्येधि शिवा पति-
भ्यंस्सुमनास्सुवर्चाः । जीवसूर्देवकामा स्योना
शं नो भव द्विपदे शं चतुष्पदे । [5]इदमहं या

---

स्वयं दृष्ट्वा तृतीयां जपेत्—अभ्रातृघ्नीमिति ॥ हे **वरुण**! त्वं **अस्यै** वध्वै या **अभ्रातृघ्नी** लक्ष्मीः **तां लक्ष्म्यम्**। 'वा छन्दसि' इति पूर्वसवर्णाभावे यणादेशः । लक्ष्मीं **सुव** देहि । हे **बृहस्पते**! त्वं च या **अपतिघ्नी** लक्ष्मीः तां लक्ष्म्यं **सुव** देहि । हे **इन्द्र**! त्वं या **अपुत्रघ्नी** लक्ष्मीः तां **सुव** देहि। हे **सवितः**! त्वं च सर्वात्मिकां **लक्ष्म्यं सुव** देहि।यथेयं भ्रात्रादिमरणं न प्राप्नोति तथा कुरुतेत्यर्थः ॥

[4]चतुर्थ्या समीक्षेत—**अघोरेति** ॥ अवयवशो निरूपणं समीक्षणम् । हे वधु! त्वं **अघोरचक्षुः अपतिघ्नी** च **एधि** भव। **शिवा पतिभ्यः**, देवराद्यपेक्षं बहुवचनम् । मह्यं पत्ये देवरादिभ्यश्च शिवा भव । **सुमनाः सुवर्चाश्च** भव । या जीवत एव सूते सा **जीवसूः**। देवान् यष्टव्यत्वेन या कामयते सा **देवकामा** । **स्योना** प्रशस्ता । सर्वत्र भवेति संबध्यते । **नः** अस्माकं सम्बन्धिनि **द्विपदे शं भव**। **चतुष्पदे** च **शं भव** सुखकरी भव ॥

[5]वध्वाः भ्रुवोरन्तरं संमृज्य प्रतीचीनं निरस्येत्—**इदमहमि-**

त्वयि पतिघ्न्यलक्ष्मिस्तां निर्दिशामि । [6]जीवाꣳ रुदन्ति विमयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः । वामं पितृभ्यो य इदꣳ समेरिरे मयः पतिभ्यो जनयः परिष्वजे । [7]व्युक्षत्क्रूरमुदचन्त्वाप

ति ॥ हे वधु ! या त्वयि पतिघ्नी पतिहन्त्री अलक्ष्मिः अलक्ष्मीः। छान्दसो ह्रस्वः । तां अहं निर्दिशामि संमृज्य निरस्यामीति । यद्दर्भस्य निरसनं तदिदमलक्ष्म्या एव निरसनमिति इदंशब्दस्यार्थः । यथेयं अलक्ष्मीः निरस्यते तथा इदं क्रियते इति ॥

[6]कन्यावियोगकाले बन्धुजनस्य रोदने जपः—जीवां रुदन्तीति ॥ कन्याया एव रोदन इत्याश्वलायनः । यथाऽऽह—' जीवां रुदन्तीति रुदत्याम् '[1] इति । जीवन्तीमेवैतां कन्यामुद्दिश्य रुदन्ति अध्वरे, ध्वरतिर्हिंसाकर्म । हिंसारहिते काले तदिदं विमयन्ते व्यत्ययं कुर्वते हर्षस्थाने शोचन्ति । त इमे दीर्घां दीर्घकालानुवर्तिनीं प्रसितिं प्रकृष्टं भावबन्धं आवयोः अनुदीधियुः अनुध्यायन्तु नरः कन्याबन्धुमनुष्याः । ये इदं विवाहकर्म समेरिरे प्रेरिरे प्रवर्तयन्ति स्म । कीदृशं? पितृभ्यो वामं पितृणां वननीयं मयः पतिभ्यः पत्युर्मम सुखरूपं जनयः । षष्ठ्येकवचनस्थाने प्रथमाबहुवचनम् । जन्याः अस्या वध्वाः परिष्वजे परिष्वङ्गाय पर्याप्तं एवम्भूतं विवाहकर्म प्रवर्तितवन्तः ते कन्याबन्धुमनुष्याः आवयोः भाविनं दीर्घं भावबन्धमालोच्य मा रुदन्त्वित्यर्थः ॥

[1] गृ. १-८-४.

**आऽस्यै ब्राह्मणास्स्नपनं॑ हरन्तु । अवीरघ्नीरुदंचन्त्वापः । [8]अर्यम्णो अग्निं परि यन्तु क्षिप्रं प्रतीक्षन्तां॒ श्वश्र्वो देवराश्च । [9]खेऽनसः खे रथः खे**

---

[7]मन्त्रवतोऽद्धचः प्रहिणुयात—व्युक्षदिति ॥ व्युक्षत्, उक्षतिः सेचनकर्मान्यत्र, इह तु अपगमे द्रष्टव्यः पञ्चमश्च लकारः । यदपां **क्रूरं** तदपगच्छतात् **आपः उदचन्तु** उद्गच्छन्तु । किमर्थमेवं प्रार्थ्यते? **अस्यै** अस्या वध्वाः **स्नपनं** उदकं **आहरन्तु ब्राह्मणाः । अवीरघ्नीः ।** जसि 'वा छन्दसि' इति पूर्वसवर्णः । वीराः पुत्राः तद्धननस्वभावाः वीरघ्न्यः ततोऽन्याः अवीरघ्न्यः **उदचन्त्वापः** । अवीरघ्नीरिति विशेषणविवक्षया पुनरिदमुक्तम् ॥

[8]वध्वाः शिरसि दर्भेण्वनिधानम्—**अर्यम्ण इति** ॥ अर्यमा आदित्यः तस्य प्रसादात् **अग्निं** इमं विवाहाग्निं **परियन्तु क्षिप्रं** परिवेष्टय्च मण्डलीभूताः तिष्ठन्तु यथेदमिण्वं मण्डलीभूतम्, परीत्य च **प्रतीक्षन्तां** पश्यन्तु । के? **श्वश्र्वः** वध्वा मम च मातरः **देवराश्च** वध्वा मम च भ्रातरः ॥

[9]तस्मिन्निण्वे दक्षिणं युगच्छिद्रं प्रतिष्ठापयति—**खेऽनस इति** ॥ अत्रेतिहासमाचक्षते—अपालानाम काचित् कन्या श्वित्रिणी । तां न कश्चिदुपयेमे । तस्याश्च मनसि कामः सदा बभूव कथमहं इन्द्रं यजे इति । सा कदाचित् स्नानार्थं नद्यामवतीर्णा स्रोतसा ह्रियमाणा तमेव कामं मनसि दधाना स्रोतसोपनीतं सो-

**युगस्य शचीपते । अपालामिन्द्र त्रिः पूत्व्यंकरः सूर्यवर्चसम् । [10]शं ते हिरण्यꣳशमु सन्त्वा*पꣳशं ते मेधी भवतु शं युगस्य तृद्म । शं त आपꣳशतप-**

---

ममपश्यत् । तं दन्तैः पिष्ट्वा तद्रसं इन्द्राय उपाहरत् । तमिन्द्रः पीत्वा रथस्यानसो युगस्येति त्रयाणां छिद्रेषु अपो निस्सार्य ताभिः तां त्रिः पूत्वा सूर्यवर्चसमकरोत् । तदेतत् 'कन्या वारवायती '† इत्यस्मिन् वर्गे द्रष्टव्यम् । रथ इति षष्ठ्यर्थे प्रथमा । रथादीनां खेषु छिद्रेषु अपो निस्सार्य **त्रिः पूत्वी** । छान्दसो रेफउपजनः । **पूत्वा** शोधयित्वा हे **शचीपते** ! हे इन्द्र ! त्वं **अपालां** नाम कन्यां **सूर्यवर्चसं अकरत्** अकरः । पुरुषव्यत्ययश्छान्दसः । तथैव एनामपि कुर्वित्यर्थः ॥

[10]छिद्रे सुवर्णनिधानमन्त्रः—**शं त इति** ॥ छिद्रे निधीयमानं **हिरण्यं ते शं भवतु शमु सन्तु** । उ इत्यनर्थकः पादपूरणः । **आपश्च** तत्र निषिच्यमानाः ते शं सुखं सन्तु भवन्तु । अप्रसिद्धपाठस्तु समु शं त्वाप इति । तत्राप्यर्थः स एव । सकारशकारयोर्व्यत्ययः । **मेधी** खलेवाली, अत्र तु युगस्य अभिधानमेतत् । मेध्यपि ते शं भवतु । **युगस्य तृद्म** छिद्रमपि तथा शं भवतु । **शतपवित्राः** बहूनां शोधयित्र्यः **आपश्च** ते शं भवन्तु । विशेषणविष-

---

*समु शन्त्वा.

†ऋ. सं. ८-९१-१.

**वित्रा भवन्त्वथा पत्या तन्व१ँ स१ँ सृजस्व ॥ १ ॥**

**दीधियुर्नरोऽष्टौ च ॥ १ ॥**

**[1]हिरण्यवर्णाश्शुचयः पावकाः प्रचक्रमुर् हित्वाऽवद्यमापः। शतंपवित्रा वितता ह्यासु ताभिष्ट्वा देवस्सविता पुनातु। [2]हिरण्यवर्णाश्शुचयः पावका**

क्षया पुनर्वचनम्। अथ अनन्तरं पत्या मया तन्वं तनुं संसृजस्व संयोजय संभोगकाले ॥

इति श्रीहरदत्तविरचितायां एकाग्निकाण्डव्याख्यायां प्रथमः खण्डः.

---

[1]उत्तरे पञ्च स्नानमन्त्राः—हिरण्यवर्णा इति ॥ हिरण्यवर्णाः हिरण्यस्येव वर्णो यासां ताः शुद्धवर्णाः शुचयः शुद्धाः पावकाः शोधयित्र्यः प्रचक्रमुः प्रवर्तन्ते हित्वाऽवद्यं पापं त्यक्त्वा आपः। आसु हि शतंपवित्राः बहूनि पवित्राणि तीर्थानि विततः विस्तृतानि। ताभिः अद्भिः त्वा देवः सविता पुनातु ॥

[2]द्वितीयमन्त्रे कश्यप इत्यादित्यस्याभिधाम्—पश्यति सर्वमिति पश्यः पश्य एव पश्यकः तत्राद्यन्तविपर्यासेन कश्यपो भवति। दृश्यते चारण्यके—'कश्यपः पश्यको भवति। यत्सर्वं परिपश्यति'* इति। स चाङ्क्यः प्रातरुद्यन् तासु जात इत्युच्यते। अग्नेश्च

*आ. १-८.

यासु जातः कश्यपो यास्वग्निः । या अग्निं गर्भं दधिरे सुवर्णास्तास्त आपश्शꣳ स्योना भवन्तु । [3]यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं गर्भं दधिरे सुवर्णास्तास्त आपश्शꣳ स्योना भवन्तु । [4]यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा निविष्टाः । या अग्निं गर्भं दधिरे सुवर्णास्तास्त आपश्शꣳ स्योना भवन्तु । [5]शिवेन त्वा चक्षुषा पश्यन्त्वापश्शिवया तन्वोपस्पृशन्तु त्वचं ते । घृतश्चुतश्शुचयो याः पावकास्तास्त

---

वैद्युतस्य अप्सु जन्म, धारणं च तस्यैव । सुवर्णाः शोभनवर्णाः ताः आपः ते शं स्योनाः सुखकराः भवन्तु । स्योनमित्यपि सुखनाम, ऐहिकपारलौकिकसुखस्य भेदादपौनरुक्त्यम् ॥

[3]तृतीयः—यासां राजेति ॥ स्पष्टार्थः ॥

[4]चतुर्थः—यासां देवा इति ॥ यासां अपां भक्षं भोजनं दिवि द्युस्थाने देवाः कृण्वन्ति कुर्वन्ति । या अन्तरिक्षे बहुधा निविष्टाः मेघेषु । या अग्निं गर्भं दधिरे बडबानलरूपं धृतवत्यः । ता इत्यादि । गतम् ॥

[5]शिवेन त्वेति ॥ हे वधु ! आपः त्वां शिवेन चक्षुषा पश्यन्तु शिवया च तन्वा ते त्वचं उपस्पृशन्तु घृतश्चुतः

आपश्शं स्योना भवन्तु। [6]परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः। वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः। [7]आशासानेत्येषा*। [8]पूषा त्वेतो नयतु

घृतरसं दुहानाः। शुचय इत्यादि। गतम्॥

[6]अहतस्य वाससः परिधानम्—परि त्वा गिर्वण इति॥ हे इन्द्र! त्वं **गिर्वणः**, वनषणसम्भक्तौ, स्तुतिलक्षणाभिर्गीर्भिः सम्भजनीयः स्तुतीनां वा सम्भक्तः **इमा** मदीया **गिरः त्वा** त्वां **परिभवन्तु**, परिपूर्वो भवतिः परिग्रहे वर्तते, परिगृह्णन्तु **विश्वतः** सर्वतो यथा इमामिदं वासः परितो भवतीत्यभिप्रायः। कीदृशं त्वां? **वृद्धायुं** वृद्धान् गुरून् प्रति गन्तारं, कीदृश्यो गिरः? **अनुवृद्धयः**, अनुरनर्थकः, वृद्धयः प्रवृद्धास्ताश्च **जुष्टाः** सेविता **भवन्तु** त्वया **जुष्टयः** सेवितव्याः॥

[7]योक्त्रबन्धनम्—आशासानेति॥ **सौमनसं** सौमनस्यं **प्रजां** सौभाग्यं **तनूं** चाशासाना अग्नेरनुव्रता भूत्वा वधूरियं तिष्ठति, तामिमां योक्त्रेण **संनह्ये** बध्नामि **सुकृताय** विवाहाख्याय पुण्याय कर्मणे। कमित्यनर्थकम्। सुखं यथा भवति तथा बध्नामीति वा॥

[8]अथैनामग्निमभ्यानयति—पूषा त्वेति॥ पूषा आदित्यः

*आशासाना सौमनसं प्रजाꣳ सौभाग्यं तनूम्। अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कम्॥(सं. १-१-१०.)

हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान्गच्छ गृहपत्नी यथाऽसो वशिनी त्वं विदथमावदासि ॥२॥

भवन्तु पश्चं च ॥ २ ॥

[1]सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः । [2]सो-

---

त्वा इतः प्रदेशादग्निसमीपं नयतु हस्तगृह्य हस्ते गृहीत्वा । इतो नीतां कृतहोमां रथादिना प्रोह्यमाणां त्वां अश्विनौ प्रवहतां अनुमन्येतां, इदमेवैतयोः प्रवहणं यदियमनुमतिः । ततश्च त्वं गृहान् गच्छ मदीयान् यथा गता गृहपत्नी गृहस्य पतिरीश्वरा असः स्याः तथा गच्छ । गत्वा च वशिनी स्वामिनी भूत्वा विदथं यज्ञं तद्विषयं वक्तव्यं आवदासि आभिमुख्येन वद ॥

इति द्वितीयः खण्डः.

---

[1]आज्यभागान्ते उत्तराभ्यामभिमन्त्रणम्—सोमः प्रथम इति ॥ सोमः प्रथमः त्वां विविदे लब्धवान् । तत उत्तरो गन्धर्वः विश्वावसुः विविदे । तृतीयस्त्वाग्निस्ते तव पतिः । मनुष्यजाः मनुष्यजातस्त्वहं ते तुरीयः चतुर्थः पतिः ॥

[2]एष एवार्थः किञ्चिद्विशेषेणोच्यते—सोमोऽददादिति ॥ सोमोऽददत् अदात् दद्याद्वा रयिं धनम् ॥

मोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्रा-ँश्चादादग्निर्मह्यमथो इमाम् । [3]गृभ्णामि ते सुप्र-जास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । [4]ते ह पूर्वे जनासो यत्र पूर्ववहो हिताः । मूर्धन्वान् यत्र सौभ्रवः पूर्वो देवेभ्य आतपत् ।

---

[3]यद्योगाद्विवाहे पाणिग्रहणशब्दः तत्र मन्त्राश्चत्वारः—**गृभ्णामि** त इति ॥ ते तव हस्तं अहं **गृभ्णामि** गृह्णामि । किमर्थं? **सुप्रजास्त्वाय** शोभनाः प्रजाः यस्यास्सा सुप्रजाः तस्या भावः सुप्रजास्त्वं, छान्दसो दीर्घः, तस्मै । किञ्च—**मया पत्या** सह **यथा** त्वं **जरदष्टिः असः** स्याः तथा गृह्णामि । जरावस्थायाः प्राप्तिः तस्याः प्रकाशनं वा यस्यास्सा जरदष्टिः । **पुरन्धिः** पुरुधीः बहुप्रज्ञः बहुकर्मा वा, भगादीनां चैतत्प्रत्येकं विशेषणम् । अन्ये तु—इन्द्रस्याभिधानं मन्यन्ते । भगादयो **देवाः मह्यं त्वा अदुः** दत्तवन्तः किमर्थं? मम **गार्हपत्याय** गार्हस्थ्याय ॥

[4]**ते हेति** ॥ हशब्दो निरर्थकः । ते भगादयः **पूर्वे जनासः** पूर्वे जनाः **पूर्ववहः** आदिकाले विवाहस्य कर्तारः **यत्र** गार्हस्थ्ये **हिताः** स्थिताः । यत्र च **सौभ्रवो मूर्धन्वान्** स्थितः **पूर्वो देवेभ्यः** देवानां प्रथमः **आऽतपत्** आ समन्तात् अतपत् । **सुभ्रूः** अदितिः शोभने भ्रुवौ यस्यास्सा **सुभ्रूः** तस्याः अपत्यं

[5]सरस्वति प्रेदमव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः । [6]य एति प्रदिशस्सर्वा दिशोऽनु पवमानः । हिरण्यहस्त ऐरंम-

सौभ्रवः आदित्यः । मूर्धा शिरः तेन प्राधान्यं लक्ष्यते मूर्धन्वान् प्राधान्यवान् । अग्निर्वा सौभ्रवः, स च मूर्धन्वान् 'अग्निर्मूर्धा'* इत्यस्यामृचि स्तुतः । तथा चाश्वलायनः—'अग्निर्मूर्धन्वान्विराजौ संयाज्ये'† इति । पूर्वो देवेभ्य इति च सुसङ्गतम् । 'अग्नि-र्मुखं प्रथमो देवतानाम्' इति मन्त्रान्तरे दर्शनात् । ते भगादयः यत्र स्थिताः तस्मै गार्हपत्याय मह्यं त्वामदुः तस्मात्ते हस्तं गृह्णामीति योज्यम् ॥

[5]**सरस्वतीति** ॥ हे **सरस्वति**! त्वं च **इदं** पाणिग्रहणं **प्राव** प्रकर्षेण रक्ष । हे **सुभगे! वाजिनीवति**! वाजोऽन्नं तद्वति! स्तुतिर्वा वाजिनी तद्वति हविर्भिस्स्तुतिभिश्च तद्वति! **तां त्वा** वयं **विश्वस्य भूतस्य** सर्वेषामेव **अग्रतः प्रगायामसि** प्रगायामः प्रकर्षेण स्तुमः 'इदन्तो मसि' ॥

[6]**य एतीति** ॥ एष **पवमानः सर्वा दिशः प्रदिशश्चान्वेति** अनुक्रमेणैति **हिरण्यहस्तः** भक्तेभ्यो देयं हिरण्यं हस्ते यस्य सः हिरण्यहस्तः **ऐरंमः** इरामन्नं तां मिमीते करोतीतीरंमः अग्निः तस्यायं सखा **ऐरंमः** वायुसखा इति ह्यग्निमुपचरन्ति, य एवं-

*सं. ४-४-४. †श्रौत. १०-६.

स्स त्वा मन्मनसं कृणोतु । [7]एकमिषे विष्णुस्त्वाऽन्वेतु [8]द्वे ऊर्जे [9]त्रीणि व्रताय [10]चत्वारि मायोभवाय [11]पञ्च पशुभ्य [12]ष्षडृतुभ्य [13]स्सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु । [14]सखा सप्तपदा भव

भूतो वायुः सः त्वा त्वां मन्मनसं मयि मनो यस्यास्सा मन्मनाः तादृशीं कृणोतु करोतु ॥

[7—13]अथैनां सप्तपदान्यभिप्रक्रमयति—एकमिष इति ॥ इट् अन्नं, एकं पदं विष्णुः त्वाऽन्वेतु इषे तवान्नं यथा स्यादिति । ऊर्क् बलम् । व्रतं कर्म । मयः सुखं तद्भावाय भवतीति मयोभूः तस्या भावो मायोभवं तस्मै, 'मायो भव्याय'* इत्याश्वलायनः । पञ्च पशुभ्यः । षडृतुभ्यः । सप्त सप्तभ्यः । सर्वत्र विष्णुस्त्वाऽन्वेत्वित्यनुषङ्गः । होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽच्छावाक आग्नीध्र इत्येतास्सप्त होत्राः । तथा च ब्राह्मणं 'तस्मात्सौम्यस्याध्वरस्य यज्ञक्रतोः । सप्तहोत्राः प्राचीर्वषट्कुर्वन्ति'† इति । ताभ्यः ताः यज्ञकर्मणि तव यथा स्युरित्येवमर्थं विस्णुस्त्वाऽन्वेतु ॥

[14]सप्त पदानि यया क्रान्तानि सा सप्तपदा एवंभूता त्वं सखा भव । सप्तपदा सप्तपदौ । द्विवचनस्याकारः । सप्तपदौ त्वं च अहं च सखायौ बभूव बभूविव । छान्दसो विशब्दस्यलोपः । आद-

*गृ. १-७-१९. †ब्रा. २-२-६.

सखा॑यौ स॒प्तप॑दा बभूव स॒ख्यं ते॑ गमेयꣳ स॒ख्यात्ते॒ मा योषꣳ स॒ख्यान्मे॒ मा योष्ठास्सम॑याव संक॑ल्पा-वहै॒ संप्रि॑यौ रो॒चि॒ष्णू सुम॒न॒स्यमा॑नौ । इ॒षमू॒र्ज॑-म॒भि सं॒वसा॑नौ॒ सं नौ॒ मना॒ꣳसि॒ सं व्र॒ता समु॒ चि॒त्तान्याक॑रम् । सा त्वम॒स्यमू॒हमम॒मू॒हम॑स्मि॒ सा त्वं

रार्थं पुनर्वचनम् । सख्यं ते गमेयं गम्यासं सख्यात्ते मा योषं वियुक्तः पृथक्कृतो मा भूवं, त्वं च सख्यान्मे मा यो-ष्ठाः । समयाव । संपूर्वस्य इणो लोटि रूपम् । सङ्गतौ स्याव । सङ्कल्पावहै इदमिदं च कर्तव्यमिति । सम्प्रियौ परस्परं सम्प्री-यमाणौ रोचिष्णू सदृशसम्बन्धत्वात् परस्पराश्रयेण दीप्यमानौ सुमनस्यमानौ सुमनायमानौ । भृशादिरयं छान्दसस्सलोपाभावः । इषमूर्जमभिसंवसानौ सहानुभवन्तौ समयावेति सम्बन्धः । नौ आवयोः मनांसि व्यापारबहुत्वान्मनोबहुत्वं समाकरं सङ्गतानि करोमि । तथा व्रता व्रतानि कर्माणि समाकरं यस्त्वया ध-र्मश्चरितव्यः सोऽनया सहेति । तथा समुचित्तानि उ इत्य-नर्थकः, मनस उक्तत्वाद्बाह्येन्द्रियाण्यत्र चित्तानि तान्यपि समा-करम् । सा त्वं सेति ऋचोऽभिधानम्, अम इति साम्नः । 'सैव नाम ऋगासीदमो नाम साम' * इति बह्वृचब्राह्मण-दर्शनात् । त्वं साऽसि ऋगसि अमोऽहम् । संहिताकाले ओका-रस्य ऊकारः । बह्वृचानां तु 'अमोऽहम्' इति पाठः । एत-देवादरार्थं पुनरुच्यते । अमूहमस्मि अमः अहमस्मि सा त्वं

*ऐ. ब्रा. ३-२-२३.

**द्यौरहं पृथिवी त्वꣳ रेतोऽहꣳ रेतोभृत्त्वं मनोऽहमस्मि वाक्त्वꣳ सामाहमस्म्यृक्त्वꣳ सा मामनुव्रता भव पुꣳसे पुत्राय वेत्तवै श्रियै पुत्राय वेत्तव एहि सूनृते ॥ ३ ॥**

**अग्नतष्षट्च ॥ ३ ॥**

**[1]सोमाय जनिविदे स्वाहा [2]गन्धर्वाय जनिविदे**

---

ऋक्त्वं यथा ऋक्सामे परस्परं सम्बद्धे एवमावामपीत्यर्थः । **द्यौरहं पृथिवी त्वं** औत्तराधर्यमत्र विवक्षितम् । **रेतोऽहं** कार्यकारणयोरभेदोपचारः । **रेतोभृत्त्वं** मया निषिक्तस्य रेतसो भर्त्री त्वम् । **मनोऽहमस्मि वाक्त्वं** यथा मनसा चिन्तितं वाग्ब्रूते एवमावयोरानुकूल्यमित्यर्थः । **सामाहमस्म्यृक्त्वं** एवंभूता **सा त्वं मां** प्रति **अनुव्रता** अनुकूला **भव** । किमर्थं? **पुंसे पुत्राय वेत्तवै** पुमांसं पुत्रं लब्धुं **श्रियै पुत्राय वेत्तवे** श्रियश्च पुत्रस्य च लाभार्थम् । पुत्रस्य पुनर्वचनमादरार्थम् * । **एहि** आगच्छ प्रिया वाक् सूनृता तद्योगात् **सूनृते** ! इत्यामन्त्रणम् ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने तृतीयः खण्डः.

---

[1—3]उत्तरे षोडश प्रधानाहुतिमन्त्राः—**सोमाय जनिविदे** वधूं लब्धवते । **गन्धर्वाय जनिविदे** । **अग्नये** ॥

---

*स्त्र्यपत्यलाभार्थं वेत्यधिकपाठः.

स्वाहाऽ[3]ग्नये जनिविदे स्वाहा । [4]कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थ स्वाहा । [5]प्रेतो मुञ्चाति नामुतस्सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वस्सुपुत्रा सुभगाऽसति । [6]इमां त्वमिन्द्र मीढ्वस्सुपुत्राꣳ सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि । [7]अग्निरैतु प्रथमो देवतानाꣳ

---

[4]कन्यलेति ॥ कन्यैव कन्यला लशब्दः उपजनः । **पितृभ्यः** पितृकुलात् **पतिलोकं** पतिकुलं **यती** गच्छन्ती **दीक्षां** कन्यकाव्रतं **अवादास्थ** दीङ् क्षये इत्यस्यान्तर्भावितण्यर्थस्य लुङि प्रथमपुरुषैकवचने रूपं, तकारस्य थकारः छान्दसः, अवक्षपितवती त्यक्तवतीत्यर्थः ॥

[5]प्रेत इति ॥ इन्द्रः प्रार्थ्यते 'इन्द्र मीढ्वः' इत्यामन्त्रितयोगात् । पुरुषव्यत्ययः । हे इन्द्र ! मीढ्वः ! वर्षेण सेक्तः ! इमां वधूं **इतः** पितृकुलात् **प्रमुञ्चाति** प्रमुञ्च **नामुतः** न पतिकुलात्, किन्तु **सुबद्धाममुतस्करत्** अमुष्मिन् पतिकुले सुबद्धां सुष्ठु बद्धां करत् कुरु । **यथेयं** सुबद्धा सती **सुपुत्रा सुभगा** च **असति** स्यात् ॥

[6]इमामिति ॥ **त्वमिन्द्र! मीढ्वः!** **इमां** वधूं **सुपुत्रां सुभगां** च **कृणु** कुरु । **अस्यां दश पुत्रानाधेहि** स्थापय **पतिं** मां **एकादशं कृधि** कुरु ॥

[7]अग्निरिति ॥ **अग्निरैतु** अग्निरागच्छतु । कीदृशः ? **देवतानां प्रथमः** ।

सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्री पौत्रमघं न रोदात्। [8]इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुध्यतामियम् । [9]मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यस्संविशन्तु । मा

---

आगत्य च सः अस्यै अस्याः प्रजां मृत्युपाशान्मुञ्चतु । अयं च वरुणो राजा तत् अग्निना क्रियमाणं अनुमन्यताम्। यथा मोचिता सती इयं स्त्री पौत्रं पुत्रनिमित्तं अघं व्यसनमुद्दिश्य न रोदात् न रुद्यात् ॥

[8]इमामिति ॥ इमां वधूं अग्निस्त्रायतां रक्षतु गार्हपत्यः गृहपतिसंयुक्तो वैवाहिकोऽग्निः । न केवलमिमामेव त्रायतां, अस्यै अस्याः प्रजां च दीर्घमायुर्नयतु । किं बहुना? अशून्योपस्था पुत्रमण्डितोत्सङ्गा जीवतां च पुत्राणां माताऽस्तु पौत्रं पुत्रनिमित्तं च आनन्दं अभिप्रबुध्यतां स्वापात्प्रबुध्यमाना पौत्रमानन्दं प्रतिबुध्यतां इयं वधूः ॥

[9]मा ते गृहे इति ॥ हे वधु ! त्वदीये गृहे निशि घोषः आर्तप्रलापः मोत्थात् मा प्रादुर्भूत् । रुदत्यः सर्वाः त्वत् त्वत्तः अन्यत्र संविशन्तु । त्वं च विकेशी विशीर्णकेशा भूत्वा

त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके वि-
राज पश्यन्ती प्रजाꣳ सुमनस्यमानाम् । [10]द्यौस्ते
पृष्ठꣳ रक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तꣳ स-
विताऽभि रक्षतु । आ वाससः परिधानाद्बृहस्पतिर्विश्वे
देवा अभि रक्षन्तु पश्चात् । [11]अप्रजस्तां पौत्रमृत्युं

---

उरो मा वधिष्ठाः उरस्ताडनं मा कार्षीः तन्निमित्तं ते मा भूत् । तदाह—जीवपत्नी जीवः पतिर्यस्यास्सा जीवपत्नी पतिलोके पतिगृहे विराज दीप्यस्व प्रजां च सुमनस्यमानां पश्यन्ती । पतिवियोगः पुत्रवियोगो वा रोदननिमित्तं, तदुभयं ते मा भूदित्यर्थः ॥

[10]द्यौस्ते पृष्ठं इति ॥ तव पृष्ठं पृष्ठभागं द्यौः रक्षतु । वायुरूरू रक्षतु । अश्विनौ च स्तनं स्तनौ रक्षताम् । धयन्तं पुत्रं सविताऽभिरक्षतु । त्वां च आ वाससः परिधानात् यत्तद्वाससः परिधानं 'परित्वा गिर्वणो गिरः'* इति आ तस्मात् बृहस्पती रक्षतु । पश्चात्तु विश्वे देवा अभिरक्षन्तु ॥

[11]अप्रजस्तां इति ॥ न विद्यते प्रजा यस्यास्सा अप्रजाः तस्या भावः अप्रजस्ता तां पौत्रमृत्युं पुत्रसम्बन्धि मरणं पाप्मानं पापं उत वा अपि वा अघं पापनिमित्तं व्यसनं एतत्सर्वं च त्वत्तः

---

* १-२-६.

पाप्मानंमुत वाऽघम् । शीर्षण्स्स्रजंमिवोन्मुच्यं द्विषद्भ्यः प्रतिं मुञ्चामि पाशंम् । [12]इमं में वरुण [13]त-

उन्मुच्य ते द्विषद्भ्यः पाशं प्रतिमुञ्चामि यथा शीर्षण्स्स्रजं उन्मुच्य वृक्षादिषु प्रतिमुञ्चन्ति तद्वत् ॥

[12]इमं मे वरुण इति ॥ हे वरुण ! इमं मे हवं आह्वानं श्रुधि शृणु । श्रुत्वा च अद्या च अद्यैव मृडय सुखय त्वां अहं अवस्युः पालनकाम आचके आगायामि स्तुवे ॥

[13]तत्त्वा इति ॥ हे वरुण ! उरुशंस ! बहूनां शंसनीय ! स्तुत्य ! नः अस्माकं आयुः मा प्रमोषीः । अहेडमानः अक्रुद्ध्यंश्च भूत्वा इह कर्मणि मयोच्यमानं बोधि बुध्यस्व तत्त्वा यामि तत् अनन्तरोक्तमर्थजातं त्वा त्वां यामि याचामि ब्रह्मणा मन्त्रेण वन्दमानः स्तुवन् हविर्भिर्यजमानः सर्वोऽपि तदेवाशास्ते । एवमियमृक् अर्थानुगुण्यात् व्युत्क्रमेण योजिता ॥

[12]इमं में वरुण श्रुधी हवंमद्या चं मृडय । त्वामंवस्युराचंके ॥ (सं. २-१-११.)

[13]तत्त्वां यामि ब्रह्मंणा वन्दंमानस्तदाशांस्ते यजंमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुंश-ँस मा न आयुः प्रमोंषीः ॥ (सं. २-१-१.)

त्वां याम्नि [14]त्वं नो अग्ने [15]स त्वं नो अग्ने [16]त्वमग्ने

---

[14]त्वं नो अग्ने इति ॥ हे अग्ने! विद्वान् सर्वस्य वेदिता त्वं नः अस्माकमुपरि देवस्य वरुणस्य यत् हेडः क्रोधः तत् अवयासिसीष्ठाः । यातेर्यसेर्यजतेर्वा आशिषि लिङि रूपमेतच्छान्दसम् । अर्थस्तावदयं अवयक्षीष्ठाः अवाचीनं यथा भवति तथा यक्षीष्ठाः इति । यजिष्ठः अतिशयेन यष्टा वह्नितमः अतिशयेन वोढा हविषां शोशुचानः देदीप्यमानः विश्वा विश्वानि अस्मद्विषयाणि शत्रूणां द्वेषांसि द्वेषविषयाणि फलानि वधबन्धनादीनि प्रमुमुग्धि प्रमुञ्च अस्मत् अस्मत्तः ॥

[15]स त्वं इति ॥ हे अग्ने ! एवमुक्तगुणः अवमो मूलभूतो देवानां 'अग्निरवमो देवतानां विष्णुः परमः'* इति ब्राह्मणम् । नः अस्माकं ऊती ऊत्या पालनेन नेदिष्ठः अन्तिकतमो भव ।

---

[14]त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥ (सं. २-५-१२.)

[15]स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि ॥ (सं. २-९-१२.) *सं. ५-५-१.

**अयाऽस्यया सन्मनसा हितः । अया सन् हव्यमूहिषेऽया नो धेहि भेषजम् ॥ ४ ॥**

**इयमष्टौ च ॥ ४ ॥**

---

कदा? **अस्या उषसो व्युष्टौ** । व्युच्छतेः क्तिन् । अस्यामुषसि व्युष्टायाम् । उपलक्षणं चैतत् सर्वदेत्यर्थः । **अवयक्ष्व** अवाचीनो यथा भवति तथा यक्ष्व । कं? **वरुणं** अस्मासु पाशान् मुमुक्षुं, **नः** अस्मभ्यं **रराणः** इष्टानि ददत् **वीहि** खाद **मृडीकं** सुखयितारं पुरोडाशादिकं अस्माभिर्दत्तम् । **नः** अस्माकं **सुहवः** सुष्ठु हवः आह्वानं यस्य सः सुहवः **एधि** भव । **नः** अस्मान् **एधि** वर्धय ॥

[16]**त्वमग्ने** इति ॥ हे **अग्ने** ! **त्वमयाऽसि** अया असि । छान्दसस्सवर्णदीर्घः, इणोऽसुन्प्रत्ययः । भक्तानामेतव्यः भक्तान्वा प्रत्येता **अया सन्** अयास्सन् । छान्दसस्सकारलोपः । एवंभूतस्त्वमस्माभिः **मनसा हितः** प्रणिहितः असीत्यनुषङ्गः, त्वां वयं मनसि प्रणिदध्महे इत्यर्थः । **अया सन्** अयास्सन् । पूर्ववत्सलोपः । **हव्यं** अस्माभिर्दत्तं **ऊहिषे** देवेभ्यो वहस्व स त्वं **अयाः नः** अस्मभ्यं **भेषजं धेहि** ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने चतुर्थः खण्डः.

---

[1]आ तिष्ठेममश्मानमश्मेव त्वꣳ स्थिरा भव। अभि तिष्ठ पृतन्यतस्सहस्व पृतनायतः। [2]इयं नार्युप ब्रूते कुल्पान्यावपन्तिका। दीर्घायुरस्तु मे पतिर्जीवातु शरदश्शतम्। [3]तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह। [4]पुनः पत्नीमग्निरदादायुषा सह वर्च-

---

[1]अश्मानमास्थापयति—**आतिष्ठेति** ॥ हे वधु! **इममश्मानमातिष्ठ,** आतिष्ठन्ती च त्वं यथाऽयं **अश्मा** स्थिरः तद्वत् **स्थिरा भव पृतन्यतः** पृतनाकामान् योद्धुकामान् **अभितिष्ठ** अभिद्रव, अभिद्रुत्य च **सहस्व** अभिभव **पृतनायतः** तानेव पृतन्यतः॥

लाजहोमः—**इयं नारीति** ॥ **इयं नारी** उपब्रूते उपच्छन्दयन्ती **ब्रूते कुल्पानि** लाजान् **आवपन्तिका** आवपन्ती। किमुपब्रूते? **दीर्घायुरस्तु मे** मम **पतिः**। कोऽर्थः? **जीवातु शरदश्शतं** शतं संवत्सरान् जीव्यादिति॥

[3]प्रदक्षिणमन्त्राः—**तुभ्यमग्र** इति ॥ हे **अग्ने! तुभ्यमग्रे** आदिकाले **सूर्यां वहतुना सह पर्यवहन्** दत्तवन्तः। सूर्या नाम सवितुर्दुहिता विवाहस्य अधिष्ठात्री देवता। वहतुरिति पितृकुललब्धस्य स्त्रीधनस्य नाम। पुनश्शब्दोऽद्यशब्दार्थे। अद्य तु **पतिभ्यः** अस्मदादिभ्यः **जायां दाः** देहि **प्रजया सह** ॥

[4]**पुनरिति** ॥ एष एवार्थः **पुनः**। **पत्नीमग्निरदात्** ददातु **आयुषा**

**सा । दीर्घायुरस्या यः पतिस्स एतु शरदश्शतम् । [5]विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः । [6]आ तिष्ठेममश्मानम् । [7]अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अध्वरः प्रेतो मुञ्चाति नामुतस्सुबद्धाममुतस्करत् । [8]तुभ्यमग्रे पर्यवहन् [9]पुनः पत्नीमग्निरदा [10]द्विश्वा उत त्वया वय [11]मा तिष्ठेममश्मानम् । [12]त्वमर्यमा भवसि य-**

---

**वर्चसा सह** । **अस्या** वध्वाः **यः पतिः स दीर्घायुः** भवतु । कोऽर्थः? **स एतु शरदश्शतं** शतसंवत्सरान् प्राप्नोतु ॥

[5]**विश्वा** इति ॥ हे अग्ने! **वयं** त्वया नाथेन **विश्वाः द्विषः** द्विड्जातीः **अतिगाहेमहि** अतितरेम **उदन्याः** उदकसम्बन्धिनीः **धारा इव** यथा वर्षधाराः वृषभादयोऽतितरन्ति तद्वत् ॥

[6]**आतिष्ठेममिति** । गतम् ॥

[7]द्वितीयो लाजहोमः—**अर्यमणमिति** ॥ **नु** क्षिप्रं अर्यत इत्यर्यमा अग्निः तं प्रसिद्धमेवार्यमणं वा **कन्याः** पूर्वं **अयक्षत** इष्टवत्यः । ताश्च इष्ट्वा[1] पतिमलभन्त । सः इदानीमपि लाजहोमेनेष्टः **अध्वरः** अहिंसितः केनापि **देवः** अर्यमा **इमां प्रेतो मुञ्चाति** इत्यादि । गतम् ॥

[8—11]**तुभ्यमग्र इति** ॥ गतम् ॥

---

[1] इष्टं.

त्कनीनां नाम स्वधावत्स्वर्यं बिभर्षि । अञ्जन्ति वृक्षं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि। [13]तुभ्यमग्रे पर्यवहन्[14]पुनः पत्नीमग्निरदा[15]द्विश्वा उत त्वया वयम् । [16]प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाऽबध्नात्सविता सुकेतः । धातुश्च योनौ सु-

---

[12]तृतीयो लाजहोमः—**त्वमर्यमेति** ॥ **त्वमर्यमा** दाता 'यः खलु वै ददाति सोऽर्यमा '* इति श्रुतेः । हे अग्ने ! त्वमेव दाता **भवसि** । **यत्** यस्मात् **कनीनां** कन्यकानां **नाम** नमनं **स्वधावत्** अन्नयुक्तं **स्वर्यं** स्वर्गस्य निमित्तं **बिभर्षि** पुष्णासि कन्यका अन्नं स्वर्गश्च त्वदायत्ताः पुरुषान् प्रत्युपनमन्ति यस्मात्तस्मात्त्वमेवार्यमा भवसीत्यर्थः । त्वामेव च **अञ्जन्ति** सिञ्चन्ति । केन ? **गोभिः** विकारेऽयं प्रकृतिशब्दः 'गोभिश्श्रीणीत मत्सरम् '† इति यथा । गोविकारैराज्यादिभिः **वृक्षं सुधितं न**, नञयं पुरस्तादुपचारः प्रतिषेधार्थीयः उपरिष्टादुपचार उपमार्थीयः, यथा सुधितं सुष्ठु निहितं स्थापितं वृक्षं जलेन सिञ्चति तद्वत् । **यत्** यस्मात् **दम्पती समनसा** समानमनसौ **कृणोषि** करोषि त्वमेव ॥

[13—15]पुनः परिक्रमणमन्त्राः—**तुभ्यमग्र** इति ॥ गतार्थाः ॥

[16]उत्तराभ्यां योक्त्रं विमुञ्चति—**प्र त्वा मुञ्चामीति** ॥ **त्वा** त्वां **वरुणस्य पाशात् प्रमुञ्चामि** । यदिदं योक्त्राद्विमोचनं तद्वे-

---

*सं. २-३-४.　　†ऋक्सं. ९-४६-४.

**कृतस्यं लोके स्योनं ते सह पत्यां करोमि । [17]इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुशेवः । धातुश्च योनौ सुकृतस्यं लोकेऽरिष्टां त्वा सह पत्यां कृणोमि । [18]अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा**

---

वं रूप्यते । येन पाशेन त्वां अबध्नात्सविता सर्वस्य प्रेरयिता **सुकेतः** सुचित्तः सुप्रज्ञानो वा **धातुश्च योनौ** ब्रह्मणश्च लोके । कीदृशे? **सुकृतस्य लोके** ब्रह्मलोको हि पुण्यस्य कर्मणो लोकः । तस्मिन् **स्योनं** सुखं स्थानं ते तव **पत्या** मया **सह करोमि** ॥

[17]योक्त्रविमोचनेनन **इमं वरुणस्य पाशं विष्यामि** विस्रंसयामि । यं पाशं **अबध्नीत** बद्धवान् **सविता सुशेवः** सुसुखः भक्तानां सुखस्य कर्तेत्यर्थः । **धातुश्च योना**वित्यादि समानम् । **अरिष्टां** अविनाशिनीम् ॥

[18]अनुगतस्यौपासनाग्नेस्समाधानमन्त्रः—**अयाश्चाग्न इति** ॥ अया इति व्याख्यातम्* । हे **अग्ने**! **त्वमयाश्चासि** न विद्यते अभिशस्तिर्यस्य सोऽनभिशस्तिः **अनभिशस्तीश्चासि** । दीर्घस्तु छान्दसः । अनवद्य इत्यर्थः । **सत्यमित्त्वमया असि** आदरार्थमिदम् । इच्छब्दोऽवधारणे । एवंभूतस्त्वमस्माभिः **अयसा** त्वां प्रतिगन्त्रा **मनसा धृतो** ध्यातः **अयसा** भक्तान् प्रतिगन्त्रा

---

* १-४-१६.

हव्यमूहिषेऽया नो धेहि भेषजम् ॥ ५ ॥

द्विषस्सुशेवस्त्रीणि च ॥ ५ ॥

[1]सत्येनोत्तभिता भूमिस्सूर्येणोत्तभिता द्यौः । ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ।

---

त्वदीयेन **मनसा हव्यं** अस्माभिर्दत्तं **ऊहिषे** देवान् प्रति वहस्व। **अयाश्च** त्वमस्मभ्यं **भेषजं धेहि** स्थापय ॥

इति श्रीहरदत्तविरचितैकाग्निकाण्डमन्त्रव्याख्याने पञ्चमः खण्डः.

---

[1]प्रयाणकाले रथस्योत्तम्भनी—**सत्येनेति** ॥ यथेयं **भूमिस्सत्येन** मनोवाक्कायजेन **उत्तभिता** उत्तब्धा स्थापिता तिष्ठति, यथा च **सूर्येणोत्तभिता द्यौः** तिष्ठति, यथा च **ऋतेन** यज्ञेन **आदित्यास्तिष्ठन्ति** 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते'* इतिस्मृतेः । यथा च **दिवि सोमो** अधिश्रितः त्वमस्माभिः उत्तब्धः तिष्ठेति वाक्यशेषाध्याहारेण योज्यम् ॥

[2]वाहावुत्तराभ्यां युनक्ति—**युञ्जन्तीति** ॥ मनुष्याः **ब्रध्नं** महतां नामैतत्, महान्तमश्वमनड्वाहं वा **अरुषं** अरुष्यतिर्गतिकर्मा, गन्तारं गमनसमर्थं **चरन्तं परितस्थुषः** स्थावरान् पदार्थान् परिवर्जयित्वा अतिक्रम्य चरन्तं, परिगच्छन् हि स्थावरानतिक्रम्य गच्छति । उत्तरार्धे यावदित्यध्याहार्यं, **रोचना** रोचनानि नक्ष-

---

*मनु. ३-७६.

[2]युञ्जन्ति ब्र॒ध्नं [3]योगेयोगे । [4]सु॒कि॒ꣳशु॒कꣳ श॑ल्म॒लिं वि॒श्वरू॑प॒ꣳ हिर॑ण्यवर्णꣳ सु॒वृत॑ꣳ सु॒च॒क्रम् । आरो-

त्रादीनि यावद्दिवि रोचन्ते तावत् एवंविधेषु कर्मसु नित्यमेव पुरुषा युञ्जन्ति इत्यर्थः ॥

[3]योगे योगे यदायदाऽश्वादे रथादौ योजनं प्राप्तं तदातदा तवस्तरं तव इति सौत्रो धातुर्वृद्ध्यर्थः गत्यर्थो वा, तवः वृद्धिर्गमनं वा, इह तु तद्वतोऽभिधानं, अतिशयेन वृद्धियुक्तं गतियुक्तं वा वाजेवाजे सङ्ग्रामनामैतत्, सङ्ग्रामेसङ्ग्रामे प्राप्ते, उपलक्षणं चैतत्, सर्वेषु सर्वकार्येषु हवामहे आह्वयामः सखायः स्तोतृत्वेन सखीभूताः वयं इन्द्रं, किमर्थं ? ऊतये पालनाय ॥

[4]आरोहन्तीमुत्तराभिरभिमन्त्रयते—सुकिंशुकमिति ॥ सुकिंशुकं रथो विशेष्यते, कण्टकिनः पलाशाः किंशुकाः शोभनाः किंशुका यस्मिन् तत् सुकिंशुकं शल्मलिं, विकारेऽयं प्रकृतिशब्दः, शल्मलिना वृक्षेण निर्मितं, वृक्षमात्रोपलक्षणं चैतत् । अन्ये तु मन्त्रलिङ्गादेताभ्यामेव रथनिर्माणमाहुः । विश्वरूपं नानारूपं हिरण्यवर्णं उज्ज्वलवर्णं सुवृतं सुष्ठु वर्तते गच्छतीति सुवृत् सुचक्रं शोभनचक्रं रथं हे वधु ! आरोह अमृतस्य अमरणस्य मम दीर्घा-

[2]युञ्जन्ति॑ ब्र॒ध्नम॑रु॒षं चर॑न्तं॒ परि॑त॒स्थुष॑ः । रोच॑न्ते रोच॒ना दि॒वि ॥(सं. ७-४-२०.) [3]योगे॑योगे त॒वस्त॑रं॒ वाजे॑वाजे हवामहे । सखा॑य॒ इन्द्र॑मू॒तये॑ ॥ (सं. ४-१-२.)

ह वध्वमृतस्य लोकꣳ स्योनं पत्ये वहतुं कृणुष्व। [5]उदुत्तरमारोहन्ती व्यस्यन्ती पृतन्यतः । मूर्धानं पत्युरारोह प्रजया च विराड्भव । [6]संराज्ञी श्वशुरे भव संराज्ञी श्वश्र्वां भव । ननान्दरि संराज्ञी भव संराज्ञी अधि देवृषु । [7]स्नुषाणाꣳ श्वशुराणां प्र-

---

युष्मो लोकं स्थानं, आरुह्य च पत्ये मह्यं स्योनं सुखकरं वहतुं पितृकुललब्धं स्त्रीधनं कृणुष्व स्थापयात्रैव रथे ॥

[5]उदिति ॥ उत्तरं श्रेष्ठं रथं उदारोहन्ती ऊर्ध्वमारोहन्ती पृतन्यतः योद्धुकामान् व्यस्यन्ती विविधं क्षिपन्ती पत्युः मम मूर्धानं आरोह प्रधानभूता भव प्रजया च विराड्भव विराडिति दशाक्षरवतः छन्दसो नाम । तथा हि श्रुतिः 'दश संपद्यन्ते दशाक्षरा विराट्'* इति । यथाविराट्छन्दो दशाक्षरवद्भवति तथा त्वं दशपुत्रा भवेत्यर्थः विराजमाना वा भव ॥

[6]प्राधान्यमेव स्फुटयति—संराज्ञीति॥श्वशुरे संराज्ञी वल्लभा भव। श्वश्र्वां च संराज्ञी भव । ननान्दरि पत्युस्स्वसा ननान्दा वध्वाः तस्यां च संराज्ञी भव । तथा देवृषु देवरेषु पत्युर्भ्रातरो वध्वा देवराः तेष्वपि संराज्ञी भव । अधिशब्दः सप्तम्यर्थानुवादी ॥

[7]तदेव पुनरुच्यते—स्नुषाणामिति ॥ अस्मद्गृहे यास्स्नुषाः तासां श्वशुराणां श्वशुरस्य तद्भ्रातॄणां प्रजायाश्च तव आगामिन्याः

---

*सं. २-६-१.

**जायाश्च धनस्य च । पतीनां च देवॄणां च सजातानां विराड्भव । [8]नीललोहिते भवतः कृत्या सक्तिर्व्यज्यते । एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यते । [9]ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु । पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ।**

---

धनस्य च मदीयस्य **पतीनां** च पत्युर्मम मत्स्थानीयानां च **देवॄणां च** देवराणां च अन्येषां च **सजातानां** गृहे मया सह जातानां **विराट्** ईश्वरा **भव** ॥

[8]सूत्रे वर्त्मनोर्व्यवस्तृणाति—नीललोहिते इति ॥ मया व्यवस्तीर्यमाणे एते सूत्रे **नीललोहिते** वर्णे **भवतः** एकं नीलमपरं लोहितम् । ततः किं? **कृत्या** । षष्ठ्येकवचनस्याकारः । कृत्यायाः परैः प्रयुक्तायाः **सक्तिः** सङ्गः प्रतिहतिः **व्यज्यते** प्रादुर्भवति सूत्राभ्यां प्रतिहता भूत्वा नास्मानभिभवितुं शक्नोतीत्यर्थः । ततश्च **एधन्ते** एधन्तां **अस्याः ज्ञातयः पतिश्च बन्धेषु** बन्धनस्थानेषु स्नेहविषयेषु **बध्यते** बध्यताम् । आत्मन एवायं परोक्षनिर्देशः अयं जनोऽब्रवीदितिवत् ॥

[9]ते सूत्रे उत्तराभिरभियाति—ये वध्व इति ॥ वध्वः इति षष्ठ्येकवचनं रूपं छान्दसम् । अस्या वध्वा **वहतुं** पितृकुललब्धं धनं, कीदृशं? **चन्द्रं** आह्लादकरं **ये यक्ष्माः** यक्ष्मस्थानीयाश्चोरादयो **यन्ति** प्राप्नुवन्ति अपहर्तुं **जनान् अनु** जनानां समीपे **तान्यज्ञिया देवाः पुनर्नयन्तु यत आगताः** ॥

[10]मा विंदन्परिपन्थिनो य आसीदंन्ति दम्पंती। सुगेभिर्दुर्गमतीतामपंद्रान्त्वरांतयः। [11]सुगं पन्थांनमारुंक्षमरिष्टङ् स्वस्तिवाहंनम्। यस्मिन्वीरो न रिष्यंत्यन्येषां विन्दते वसुं ॥ ६ ॥

धनंस्य च नवं च ॥ ६ ॥

[1]ता मंन्दसाना मनुंषो दुरोण आधत्तः रयिं

---

[10]तमेव देशं प्रति—मा विदन्निति ॥ परिपन्थिनः पन्थानं परिवृत्यापहर्तुकामा ये तिष्ठन्ति ते परिपन्थिनो मा विदन् मा लप्सत मा ज्ञासिषुर्वा ये परिपन्थिनो दम्पती आसीदन्ति आधावन्ति । सुगेभिः सुगमैः पथिभिः दुर्गं देशं अतीतां अतिक्रामतां तौ दम्पती एव । परोक्षनिर्देशः पूर्ववत् । अपद्रान्तु अपगच्छन्तु अरातयः शत्रवः त एव परिपन्थिनः ॥

[11]सुगमिति ॥ सुखेन गम्यते यस्मिन् पथि तं सुगं पन्थानं आरुक्षं आरूढवानस्मि न विद्यते रेषणं यत्र तं अरिष्टं स्वस्तिवाहनं अविनाशीनि वाहनानि यत्र । यस्मिंश्च पथि वीरः अस्मदीयो रक्षिता न रिष्यति रिष्टो न भवति, न केवलं न रिष्यति किन्तु अन्येषां परिपन्थिनामेव वसु धनं विन्दते तं पन्थानमारुक्षमिति ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने षष्ठः खण्डः.

---

[1]तीर्थादिव्यतिक्रमे जपः—ता मन्दसानेति ॥ आश्विन्येषा । ता तौ अश्विनौ मन्दसाना स्तूयमानौ मनुषः मनुरिति मनुष्यस्य

**दुशवीरं वचस्यवे । कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् । [2]अयं नो मह्याः पारं स्वस्ति नेषद्वनस्पतिः । सीरा नस्सुतरा भव दीर्घायुत्वाय वर्चसे । [3]अस्य पारे निरृक्र-**

---

नाम तस्य मनुष्यस्य **दुरोणे** गृहे एवंभूतौ युवां **वचस्यवे** वचनवते स्तुतिलक्षणं वच इच्छते मह्यं **दशवीरं** दशभिः पुत्रैस्सहितं **रयिं** धनं **आधत्तं** दत्तम् । किञ्च—**तीर्थं** मार्गे भवं सुखेन प्रपीयते यत्र तत् **सुप्रपाणं** तादृशं तीर्थं **कृतं** कुरुतं हे **शुभस्पती**! शुभ इत्युदकनाम, वृष्टिलक्षणस्योदकस्य पालयितारौ । किञ्च—पथि यस्तिष्ठति तं **पथेष्ठां** स्थाणुमपहतं अपविध्यतं **दुर्मतिं** दुष्टाशयं तस्करादिकं च अपहतम् ॥

[2]नावमुत्तरयाऽनुमन्त्रयते—**अयं न** इति ॥ **अयं वनस्पतिः** वनस्पतिविकारभूता नौरियं नः अस्मान् **मह्याः** महत्याः नद्याः **पारं** तीरं **स्वस्ति** अविनाशं यथा भवति तथा **नेषत्** नयतु। **सीरा** सीरेति नदीनामैतत्, सम्बुद्धौ चाकारः । हे सीरे! त्वं नः अस्माकं **सुतरा** सुखेन तारितुं शक्या **भव** । नदीं प्रत्येतद्वचनम् । अथ वा—**सुतरा** सुष्ठु तारयित्रीति नाव एवाभिधानं, **दीर्घायुत्वाय** । छन्दस्युकारान्तोऽप्यायुश्शब्दोऽस्ति, 'छन्दसि वा' इति वचनात् । **वर्चसे च भव** ॥

[3]तीर्त्वा जपः—**अस्य पार** इति ॥ **अस्य** नद्यादेः **पारे** तीरे **निरृक्रतस्य** निस्तरितव्यस्य **जीवाः** जीवन्तः **प्राप्ताः** ते

तस्यं जीवा ज्योतिरशीमहि । मह्या इन्द्रस्स्वस्त-
यें । [4]यदृते चिदभि श्रिषः पुरा जर्तृभ्य आतृदः ।
संधाता सन्धिं मघवा पुरोवसुर्निष्कर्ता विहृतं पु-

---

वयं ज्योतिः अभयं स्थानं अशीमहि प्राप्नुयाम । एवंभूता-
नामस्माकं इन्द्रश्च मह्यै महत्यै स्वस्तये भवतु ॥

[4]श्मशानादिव्यतिक्रमे होमः—**यदृते चिदिति** ॥ यत् 'सुपां सुलुक्' इति सोर्लुक् यः ऋते चित् ऋतेऽपि **अभिश्रिषः** अभिश्लेषणद्रव्यं अभिश्रित् तस्मादृतेऽपि **पुरा** पूर्वमेव **जर्तृभ्यः** जतुशब्दस्येदं विकृतं रूपं, तत्र बह्वृचा उकारान्तमधीयते, तत्र रेफमात्रमुपजनः । इह तु उकारस्याप्यृकारः । तृतीयान्तं चैतत् व्यत्ययेन । बहुवचननिर्देशाच्च आद्यर्थावगतिः । जत्वादिभिः **आतृदः**, स्वपितृदोः कसुन्, जत्वादिभिरातर्दनात् पुरा यावता कालेन जत्वादीन्यातृन्ते दृढीकुर्वन्ति ततः प्रागेवातिशीघ्रमित्यर्थः । **सन्धाता** तृन्नन्तमेतत्, तथा च पूर्वपदप्रकृतिस्वरत्वं कर्मणि च द्वितीया । **सन्धिं** सन्धातव्यं सन्धातव्यस्य वस्तुनः सन्धातेत्यर्थः **मघवा** इन्द्रः **पुरोवसुः** पुरुशब्दस्य छान्दस ओकारः, पुरुवसुः बहुधनः **निष्कर्ता** इदमपि तृन्नन्तं 'यद्वै निष्कृतं तत्संस्कृतम्' इति बह्वृचब्राह्मणं, संस्कर्ता **विहृतं** अत्यन्तविनष्टं पुनः । यः पुरुवसुः मघवाऽन्तरेणाप्यभिश्लेषणद्रव्यं प्रागेव च जत्वादिभिरातर्दनात् सन्धातव्यं वस्तु सन्दधाति विहृतं च पुनस्संस्करोति, साकाङ्क्षत्वात्तस्मा इति गम्यते, तस्मै स्वाहेति ॥

नः । [5]इडा॑मग्न [6]इ॒मं मे॑ वरु॒ण [7]तत्त्वा॑ यामि॒ [8]त्वं नो॑ अग्ने॒ [9]स त्वं नो॑ अग्ने॒ [10]त्वम॑ग्ने अ॒याऽसि॑ । [11]ये ग॑न्ध॒र्वा अ॑प्स॒रस॑श्च दे॒वीरे॒षु वृ॒क्षेषु॑ वान॒स्प॒त्येष्वास॑ते। शि॒वास्ते अ॒स्यै व॒ध्वै॑ भवन्तु॒ मा हि॑ꣳसिषुर्वह॒तुमू॒-

---

[5]इडामग्न इति ॥ इडां अन्नं हे अग्ने! पुरुदंसं बहुदर्शनीयं अत्यन्तश्लाघ्यं गोस्सनिं गवां दानं च शश्वत्तमं दीर्घकालस्थायिनं हवमानाय त्वामाह्वयते मह्यं साध साधय देहि । किञ्च—स्यान्नस्सूनुस्तनयश्च पौत्रो तनयः । कीदृशः? विजावा विजननस्वभावः 'जनसनखनक्रमगमो विट्', 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । किं बहुना? हे अग्ने! सा ते प्रसिद्धा सुमतिः भक्तेष्वनुग्रहात्मिका बुद्धिः अस्मे अस्मासु भूतु भवतु ॥

[6—10]इमं मे वरुणेत्यादि पञ्च गताः ॥

[11]क्षीरिवृक्षाद्यतिक्रमे जपः—ये गन्धर्वा इति ॥ ये गन्धर्वाः विश्वावसुप्रभृतयः अप्सरसश्च देवीः देव्यः एषु वृक्षेषु वानस्पत्येषु न्यग्रोधोदुम्बराश्वत्थेषु आसते तिष्ठन्ति एते वै गन्धर्वाप्सरसां गृहाः । ते अस्यै वध्वै शिवा भवन्तु मा हिंसिषुः वहतुं स्त्रीधनं ऊह्यमानां आनीयमानां इमां च ॥

---

[5]इडा॑मग्ने पु॒रु॒दꣳस॑ꣳ स॒निं गोः श॑श्व॒त्तम॒ꣳ हव॑मनाय साध । स्यान्न॑स्सू॒नुस्तन॑यो वि॒जावाऽग्ने॒ सा ते॑ सु॒म॒तिर्भू॑त्व॒स्मे ॥ (सं. ४-२-४.)

[6—10] एते मन्त्राः (२२—२४) पुटेषु लिखिताः.

ह्मणानाम् । [12]या ओषधयो या नद्यो यानि धन्वानि ये वना । ते त्वा वधु प्रजावतीं प्र त्वे मुञ्चन्त्वंहसः । [13]संकाशयामि वहतुं ब्रह्मणा गृहैरघोरेण चक्षुषा मैत्रेण । पर्याणद्धं विश्वरूपं यदस्याः स्योनं पतिभ्यस्सविता कृणोतु तत् । [14]आ वाम-

---

[12]नद्याद्यतिक्रमे जपः—**या ओषधयः** अस्माभिः अतिक्रान्ताः, **याश्च नद्यः यानि धन्वानि** निरुदकाः प्रदेशाः **ये वना** यानि वनानि, **ते** उक्ताः तत्तदधिष्ठानदेवताः हे **वधु त्वा!** त्वां **प्रजावतीं** कुर्वन्त्विति शेषः । **अंहसश्च त्वे** त्वां **प्रमुञ्चन्तु** ॥

[13]ग्रहानुत्तरया संकाशयाति—तत्र वहतुः पूर्वं प्रापयितव्यः मन्त्रलिङ्गात् । **सङ्काशयामि** प्रदर्शयामि **वहतुं** अस्याः पितृकुलादानीतं धनं **ब्रह्मणा** मन्त्रेण **गृहैः** मदीयैस्सह सङ्काशयामि । **अघोरेण** अक्रूरेण **मैत्रेण** सौम्येन **चक्षुषा,** एषा तावत् एवम्भूतेन चक्षुषा पश्यतु तामहं दर्शयामि । **यच्च अस्यां पर्याणद्धं** बन्धुभिः सर्वतो **नद्धं विश्वरूपं** नानारूपं आभरणादिकं **तत्सविता पतिभ्यः** पत्ये मह्यं मङ्गात्रादिभ्यश्च **स्योनं** सुखं **कृणोतु** करोतु ॥

[14]वाहौ विमुञ्चति—**आवामगन्निति** ॥ हे अश्विनौ! **वां** युवयोः स्वभूता **सुमतिः** अनुग्रहात्मिका बुद्धिः अस्मान् प्रति **आऽगन्** आगमत् **प्राप्ता** । हे **वाजिनीवसू!** हविर्भिः स्तुतिभिश्च धनव-

**गन्धर्वसुमतिर्वाजिनीवसू न्यश्विना हृत्सु कामाꣳ अयꣳसत । अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्याꣳ अशीमहि । [15]अयं नो देवस्सविता बृहस्पतिरिन्द्राग्नी मित्रावरुणा स्वस्तये । त्वष्टा विष्णुः प्रजया सꣳरराणः काम आयातं कामाय त्वा वि मुञ्चतु ॥ ७ ॥**

**आसते नव च ॥ ७ ॥**

---

न्तौ **कामान्** । प्रथमार्थे द्वितीया । बह्वृचाश्च तथैव पठन्ति । अस्माकं **हृत्सु** ये कामाः सुखेन गृहं प्राप्नुयामेति ते च **न्ययंसत** नियताः निश्चिता जाताः यस्मात् युवां **गोपा** गोपौ वाहयोः पथि रक्षितारौ **अभूतम्** । **मिथुना** सहचारिणौ हे **शुभस्पती**! अन्नस्य उदकस्य वा पालयितारौ युवयोश्च प्रसादात् **अर्यम्णः** आदित्यस्य अग्नेर्वा **प्रिया** भूत्वा **दुर्यान्** ग्रहान् **अशीमहि** प्रविशेम ॥

[15]**अयमिति** ॥ वाहं प्रति वचनमेतत् । हे वाह! **नः** अस्माकं **कामे** सति इह **आयातं त्वा** त्वां **कामाय** यथेष्टचरणाय **विमुञ्चतु** । कः? **अयं देवस्सविता** बृहस्पत्यादयश्च **स्वस्तये** अविनाशाय **प्रजया संरराणः** प्रजां सम्यक् ददत् प्रजया वा सम्यग्रममाणः प्रजाभिः क्रीडन्नित्यर्थः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने सप्तमः खण्डः.

[1]शर्म वर्मैदमाहरास्यै नार्यै उपस्तिरे । सिनीवालि प्रजायतामियं भगस्य सुमता असत् । [2]गृहान्भद्रान्त्सुमनसः प्रपद्येऽवीरघ्नी वीरवतस्सुवीरान् । इरां वहतो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशामि । [3]आगन्गोष्ठं महिषी गोभिरश्वैरायु-

---

[1]चर्मास्तरणम्—शर्म सुखं वर्म तनुत्राणं एवम्भूतं इदं चर्म आहर । किमर्थम्? अस्यै अस्या नार्याः उपस्तिरे उपस्तरणार्थम् । कृत्येऽर्थे केन्प्रत्ययः । दृष्टेन्दुरमावास्या सिनीवाली । हे सिनीवालि ! इयं वधूः प्रजायतां प्रजावती भूयात् । भगस्य च देवस्य सुमतौ अनुग्रहात्मिकायां बुद्धौ असत् स्यात् भवतु, सोऽपि त्वत्प्रसादात् इमामनुगृह्णात्वित्यर्थः ॥

[2]गृहान् प्रपादयन् वधूं वाचयति—गृहान् अहं प्रपद्ये । कीदृशान्? भद्रान् मनोज्ञान् सुमनसः गृहेषु अवस्थिताः श्वश्र्वादयः वधूं दृष्ट्वा सुमनसो भवन्तीति गृहास्सुमनस इत्याह । अवीरघ्नी वीराः पुत्राः अतद्धननस्वभावा अहं वीरवतो देवरादिपुत्रैस्तद्वतः सुवीरान् शोभनरक्षकपुरुषयुक्तान् इरां अन्नं वहतो घृतमुक्षमाणाः ब्राह्मणेषु भुञ्जानेषु यत्र घृतमुक्ष्यते तत इतस्सिच्यते ते गृहा उच्यन्ते घृतमुक्षमाणा इति । द्वितीयार्थे प्रथमा । प्रपद्य च तेषु एवम्भूतेषु गृहेषु अहं सुमनाः भूत्वा संविशामि ॥

**ष्मत्पत्नी प्रजया स्वर्वित् । बह्वीं प्रजां जनयन्ती सुरत्नेममग्निꣳ शतहिमास्सपर्यात् । [4]अयमग्निर्गृहपतिस्सुसꣳसत्पुष्टिवर्धनः । यथा भगस्याभ्यां दददद्रयिं पुष्टिमथो प्रजाम् । [5]प्रजायां आभ्यां प्रजाप-**

---

[3]अथोत्तरे त्रयोदश होममन्त्राः—**आगन्निति** ॥ **आगन्** आगतवती **गोष्ठं** गृहं **महिषी** मम वल्लभा भार्या **गोभिः अश्वैश्च** पितृकुललब्धैस्सह आयुष्मान्पतिर्यस्या इति **आयुष्मत्पत्नी** अनेनात्मन आयुराशास्ते । **प्रजया** अपत्येन **स्वर्वित्** स्वर्गस्य लब्ध्री 'नापुत्रस्य लोकोऽस्ति' इति प्रजयेत्युक्तम् । तत्र विशेषविधिः—**बह्वीं प्रजां जनयन्ती सुरत्ना** शोभनधना * भूत्वा **इममग्निं** औपासनाग्निं **शतहिमाः** शतसंवत्सरान् **सपर्यात्** परिचरतु अत्रेयं योग्या भवत्वित्यर्थः ॥

[4]**अयमग्निः** औपासनोऽग्निः **गृहपतिः** मदीयस्य गृहस्य पालयिता **सुसंसत्** शोभनसदनः **पुष्टिवर्धनः** मम पुष्टेर्वर्धयिता 'श्रियमिच्छेद्धुताशनात्' † इति वचनात् । एवम्भूतोऽग्निः **आभ्यां** आवाभ्यां दम्पतिभ्यां **रयिं** धनं **पुष्टिं अथो प्रजां** च **ददत्** दद्यात् । घोर्लोपो लेटि वा । **यथा भगस्य** भगाय देवाय दत्तवान् । भगग्रहणमुपलक्षणं, यथा देवेभ्य इत्यर्थः । देवानामपि हि कर्मजाः सिद्धयः ॥

[5]**प्रजायै आभ्यां** अनयोर्दम्पत्योः या प्रजा **तस्यै** हे **प्रजापते!**

---

*शोभनाभरणा, †मत्स्यपुराणवचनमिति शब्दकल्पद्रुमः.

त इन्द्राग्नी शर्म यच्छतम् । यथैनयोर्न प्रमीयातौ उभयोर्जीवतोः प्रजाः । [6]तेन भूतेन हविषाऽयमा प्यायतां पुनः । जायां यामस्मा आवाक्षुस्ताꣳ रसेनाभिवर्धताम् । [7]अभिवर्धतां पयसाऽभि राष्ट्रेण वर्धताम् । रय्या सहस्रपोषसेमौ स्तामनपेक्षितौ । [8]इहैव स्तं मा वियोष्टं विश्वमायुर्व्यश्नुतम् । मह्या

---

शर्म यच्छ इति विपरिणामेन सम्बन्धः । हे इन्द्राग्नी ! युवां च शर्म यच्छतं यथा एनयोः उभयोः जीवतोः सतोः प्रजा न प्रमीयातै न प्रमीयेत तथा शर्म यच्छतम् ॥

[6]तेनेति ॥ यदिदं मया हूयते तेन भूतेन प्राशेन वा हविषा अयं जनः आप्यायतां पुनः, वीप्सालोपोऽत्र द्रष्टव्यः, पुनःपुनः। किञ्च—अस्मै मह्यं यां जायां आवाक्षुः आवहन् दत्तवन्तः तां रसेन आज्यादिना अभिवर्धतां अभिवर्धयत्वयं जनः ॥

[7]अभीति ॥ तथा इयं अभिवर्धतां पयसा, राष्ट्रेण गृहक्षेत्रादिना च अभिवर्धताम् । तथा सहस्रपोषसा बहूनां पोषयित्र्या रय्या धनेन इमौ दम्पती अनपेक्षितौ स्तां यथा अनयोरन्यत्रापेक्षा न भवति तथा धनवृद्धिरस्तु ॥

[8]इहैवेति ॥ आत्मन एवायमन्तरात्मानं प्रति वचनम् । हे आवयोरन्तरात्मानौ ! इहैव गृहे स्तं भवतं मावियोष्टं कदाचिदपि वियुक्तौ मा भूतम्, विश्वमायुः ‘स ह षोडशं वर्षशतमजीवत्’* इति

---

*छान्दो. ३-१६-७.

**इन्द्रस्स्वस्तये । [9]ध्रुवैधि पोष्या मयि मह्यं त्वाऽदाद्बृहस्पतिः । मया पत्या प्रजावती सं जीव शरदश्शतम् । [10]त्वष्टा जायामजनयत्त्वष्टाऽस्यै त्वां पतिम् । त्वष्टा सहस्रमायूꣳषि दीर्घमायुः कृणोतु वाम् । [11]इमं मे वरुण [12]तत्त्वा यामि [13]त्वं नो अग्ने [14]स त्वं नो अग्ने [15]त्वमग्ने अयाऽसि ॥ ८ ॥**

**जीवंतोः प्रजा वामेकं च ॥ ८ ॥**

---

श्रुत्युक्तं व्यश्नुतं प्राप्नुतम् । इन्द्रश्च युवयोः मह्यै महत्यै स्वस्तये भवतु॥

[9]ध्रुवैधीति ॥ हे वधु ! मम पोष्या त्वं मयि ध्रुवा निश्चला एधि भव । मह्यं त्वा त्वां अदात् बृहस्पतिः । सा त्वं मया पत्या सह प्रजावती भूत्वा सञ्जीव शरदश्शतं बहून् वत्सरान्॥

[10]त्वष्टेति ॥ 'यावच्छो वै रेतसस्सिक्तस्य त्वष्टा रूपाणि विकरोति'* 'त्वष्टा रूपाणि पिंशतु'† इति च रूपनिर्माणे कर्तृत्वेन श्रुतो यः त्वष्टा स त्वष्टा इमां जायां अजनयत् । तथा अस्यै अस्याः त्वां पतिं च त्वष्टा एवाजनयत् हे मदीयान्तरात्मन् ! स एव त्वष्टा वां युवयोः अन्तरात्मनोः सहस्रमायूंषि बहूनि धनानि दीर्घमायुश्च कृणोतु करोतु ॥

[11—15]इमं मे वरुण इत्यादयः पञ्च गताः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने अष्टमः खण्डः.

---

११-१५ एते मन्त्राः (२३-२४)पुटेषु लिखिताः.

*सं. १-५-९. †१-१३-१.

[1]इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो रायस्पोषो निषीदतु । [2]सोमेनादित्या बलिनस्सोमेन पृथिवी दृढा । अथो नक्षत्राणामेषामुपस्थे सोम आधितः ।[3]प्रस्वस्स्थः प्रेयं प्र-

---

[1]उत्तरया चर्मण्युपविशतः—इह गाव इति ॥ इह गृहे हे गावः! प्रजायध्वं प्रजाता भवत । इहाश्वाः! इह पूरुषाः! प्रजायध्वमित्येव । सर्वत्र आमन्त्रितनिघातः छान्दसत्वान्न भवति । इहो इहैव सहस्रदक्षिणः बहुदानयोग्यः रायस्पोषः धनस्य पोषः निषीदतु ॥

[2]अथ या पुमांसमेव सूतवती जीवपुत्रा च, तस्याः पुत्रं वध्वा अङ्के उपवेशयति—सोमेनेति ॥ आदित्याः देवाः सोमेन बलिनः, सोमेन ओषधीनां वृद्धिः ओषधिवृद्धौ याग इति । पृथिवी च सोमेन दृढा ओषधिवनस्पत्यादिभिः । अथो यथा एषां नक्षत्राणां उपस्थे सोम आधितः आहितः एवमयं बालः तवोपस्थे उपविशतु ॥

[3]तस्मै फलानि प्रयच्छति—प्रस्वः स्थ इति ॥ प्रसूयन्त इति प्रस्वः हे फलानि! यूयं प्रस्वः स्थः प्रसवशीलाः स्थ । छान्दसो विसर्जनीयः, भवथ । इयमपि वधूः भुवने प्रजया अपत्येन प्रशोचेष्ट प्रसोषीष्ट यथा यूयं प्रसवशीलाः स्थ तथेयमपि युष्मत्प्रसादेन प्रसवशीला भवत्वित्यर्थः ॥

[4]उत्तरे जपति—इह प्रियामिति ॥ इह गृहे प्रजया प्रियं ते

जया भुवने शोचेष्ट । [4]इह प्रियं प्रजया ते समृध्यतामस्मिन्गृहे गार्हपत्याय जागृहि । एना पत्या तन्वꣳ सꣳसृजस्वाथा जीव्री विदथमावदासि । [5]सुमङ्गलीरियं वधूरिमाꣳ समेत पश्यत । सौभाग्यमस्यै दत्वायाथास्तं विपरेतन । [6]ध्रुवाक्षितिर्ध्रुवयोनिर्ध्रु-

**समृध्यतां** प्रीतिस्ते वर्धताम् । अनेन प्रजासम्पत्तिरुक्ता । धर्मसम्पत्तिमाह—**अस्मिन् गृहे गार्हपत्याय** गृहपतिभावाय **जागृहि** अतिथीनामग्नीनां च परिचरणे अवहिता भव । कामसंपत्तिमाह—**एना** अनेन पत्या मया तन्वं तनुं शरीरं **संसृजस्व** संभोगकाले । एवं चिरकालमनुभूय **अथ** अनन्तरं **जीव्री** जीर्णाभिधानमिदमिति निरुक्तकार आह 'आत्वारम्भ न जिव्रयः'* इत्यत्र। जीर्णा सती **विदथं** यज्ञं तद्विषयं वक्तव्यं पुत्रपौत्रादीनां **आवदासि** आभिमुख्येन वद इत्थमिदं कर्तव्यमिति ॥

[5]**सुमङ्गलीरिति** ॥ **सुमङ्गलीः** छान्दसस्सुलोपाभावः । सुमङ्गलीरियं वधूरिति स्वभावकथनम् । एवम्भूतां **इमां समेत** समागच्छत, समेत्य च **पश्यत** ईक्षध्वं ईक्षकान्प्रति वचनम् । तथा चाश्वलायनः 'सुमङ्गलीरियं वधूरितीक्षकानीक्षेत'† इति । दृष्ट्वा च **अस्यै सौभाग्यं दत्वाय** दत्वा **अथ** अनन्तरं **अस्तं** स्वस्वगृहस्थानं **विपरेतन** यथेष्टं गच्छत ॥

*ऋक्सं. ८-४५-२०. † १-८-७.

वर्मासि ध्रुवतास्स्थितम् । त्वं नक्षत्राणां मेथ्यसि स मां पाहि पृतन्यतः ।[7]सप्त ऋषयः प्रथमां कृत्तिका-नामरुन्धतीं यद्ध्रुवताꣳ ह निन्युः । षट्कृत्तिका मुख्य-

---

[6]ध्रुवं दर्शयति—ध्रुवेति ॥ **ध्रुवक्षितिः** ध्रुवनिवासः **ध्रुवयोनिः** **ध्रुवोत्पत्तिः** अन्येषां नक्षत्राणां **ध्रुवतः** ध्रुवत्वहेतौ **स्थितं** स्वयं च **ध्रुवं** नक्षत्रं **त्वमसि** । कुत एतत्? **त्वं नक्षत्राणां** भ्रमतां **मेथ्यसि** मेथी खलेवाली असि । सा यथा बलीवर्दानां अनपगमने हेतुः स्थाणुः तथा त्वं नक्षत्राणाम् । य एवम्भूतः **स** त्वं **मा** मां **पृतन्यतः** योद्धुकामात् **पाहि** ॥

[7]अरुन्धतीं दर्शयति—**सप्तेति** ॥ सप्तर्षयः काश्यपादयः । तेषां कृत्तिका नाम भार्याः सप्त । तासामरुन्धती नाम सप्तमी पतिव्रता प्रधानभूता निश्चला च । इतरा व्यभिचारशङ्कया त्यक्ता इत्यैतिहासिकाः स्मरन्ति । तदिदमुच्यते **सप्तर्षयः** काश्यपादयः **कृत्तिकानां प्रथमां** अग्रगण्यां **अरुन्धतीं यत्** यदा **ध्रुवतां** निश्चलतां **ह** इति प्रसिद्धिं दर्शयति **निन्युः** नयन्ति स्म । यदिति वचनात् तदेति अध्याहार्यम् । तदा इतराः **षट्कृत्तिकाः** अरुन्धत्यां **मुख्ययोगं** प्रधानभावं **वहन्ति** आवहन् अभ्युपगतवत्यः । तस्याः अरुन्धत्याः दर्शनेन **इयं** वधूः **अस्माकं** 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम् । मम **अष्टमी** भूत्वा **एधतु** वर्धताम्, अहं सप्तर्षीणामष्टमस्थानीयो भूयासम्, इयमपि कृत्तिकादीनामष्ठमस्थानीया भूयादित्यर्थः ॥

**योगं वहन्तीयमस्माकंमेधत्वष्टमी । [8]सदसस्पति- मद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासि- षम् । [9]उद्दीप्यस्व जातवेदोऽपघ्नन्निरृतिं मम । पशूंश्च मह्यमावह जीवनं च दिशो दश* । [10]मा-**

[8]उपाकरणसमापनयोः काण्डर्षीणामनन्तरं होमः—**सदसस्पति- मिति** ॥ सदः यज्ञगृहं तस्य पतिः सदसस्पतिः । कोऽसौ? अग्निः, स हि सर्वयज्ञानामधिपतिः देवतान्तरं वा । तं **सदसस्प- तिं अद्भुतं** महन्नामैतत् महान्तं अद्भुतकर्माणं वा, **प्रियं इन्द्रस्य** सोमपानार्थिन इन्द्रस्याग्निः प्रियो भवति तदायत्तत्वाद्यज्ञानाम्, **काम्यं** प्रार्थ्यं स्तोतृणां एवम्भूतं सदसस्पतिं **सनिं** दानं **मेधां** प्रज्ञां च **अयासिषं** याच्ञाकर्माऽयं, वर्तमाने लुङ्, याचामि ॥

[9]स्वयं प्रज्वलितेऽग्नौ समिदाधानम्—**उद्दीप्यस्वेति** ॥ हे **जात- वेदः**! **मम निरृतिं** हिंसकवर्गं **अपघ्नन्** तस्य अपहतिं कुर्वन् **उद्दीप्यस्व** । किञ्च—**पशूंश्च मह्यं आवह** आनय । **जीवनं** च **आवह** । **दिशश्च दश आवह** वशीकुर्वित्यर्थः । दिशेति पाठे, दिश अतिसर्जने, **दिशः** सर्वाः **जीवनं दिश** जीवनत्वेन देहीति, जीवनरूपेण मे दिशो देहीत्यर्थः ॥

[10]**मा न इति** ॥ हे **जातवेदः**! **नः** अस्माकं सम्बन्धिनं **मा हिंसीत्** । पुरुषव्यत्ययः । मा हिंसीः । किम्? **गामश्वं पुरु- षं जगत्** यच्चान्यज्जङ्गमम् । किञ्च—हे **अग्ने**! **अबिभ्रत्** अ-

*दिशेति वा पाठः.

नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् । अबि-
भ्रदग्न आगहि श्रिया मा परि पातय ॥ ९ ॥

ध्रुवतस्स्थितं नव च ॥ ९ ॥

[1]उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा । अ-
न्यामिच्छ प्रफर्व्यꣳ सं जायां पत्या सृज । [2]उदी-
र्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे।

---

न्वेषां हविर्वहनमकुर्वन् अस्मान्प्रति आगहि आगच्छ, आगत्य च श्रिया मा मां परिपातय परिगमय सर्वतश्श्रिया समृद्धं कुरु ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने नवमः खण्डः.

---

[1]दण्डोत्थापनमन्त्रः—उदीर्ष्वात इति ॥ उदीर्ष्व उत्तिष्ठ अतः शयनात् हे विश्वावसो! विश्वावसुर्नाम गन्धर्वः, तद्बुध्या दण्डः स्थापितः, तेनैव संबोध्यते । नमसा नमस्कारेण त्वा त्वां ईडामहे याचामहे, अन्यां इच्छ प्रफर्व्यं प्रथमवयसं स्त्रियं, इमां तु मम जायां पत्या मया संसृज ॥

[2]उदीर्ष्वात इति ॥ गतार्थः । पतिवति ह्येषा । छान्दसो ह्रस्वः । एषा हि पतिवती मया पत्या तद्वती विश्वावसुं त्वां नमसा गीर्भिः स्तुतिभिश्च ईट्टे याचे । अतश्च अन्यां इच्छ पितृषदं पितृगृहे स्थितां व्यक्तां असमाप्तविवाहाम् । स हि ते स्वभूतो भागः

अन्यामिच्छ पितृषदं व्यक्ताꣳ स ते भागो जनुषा तस्यं विद्धि । [3]अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम: प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यैतां कृणोमि स्वाहा । [4]वायो प्रायश्चित्ते [5]आदित्य प्रायश्चित्ते [6]प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम: प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा । [7]प्रसवश्चोपयामश्च

---

जनुषा जन्मना तदर्थं त्वं जात इत्यर्थः । तस्य विद्धि तं लभस्व ॥

[3–6]अथ होममन्त्राः—अग्ने प्रायश्चित्त इति ॥ प्रायो विनाशः चित्तिः सन्धानं हे प्रायश्चित्ते! विनष्टस्य कर्मणः सन्धातः! हे अग्ने! देवानां मध्ये त्वं प्रायश्चित्तिरसि । ततश्च नाथकामः अहं ब्राह्मणः त्वां प्रपद्ये । या अस्यां वध्वां पतिघ्नी तनूः पाणिरेखादिः या च प्रजाघ्नी या च पशुघ्नी या च लक्ष्मिघ्नी छान्दसो ह्रस्वः, अस्यै अस्याः तनूं जारघ्नीं कृणोमि करोमि । इदं मे चिकीर्षितं, तेन त्वां प्रपद्ये । एतेन उत्तरास्त्रयो व्याख्याताः । मध्यमयोश्च 'त्वं देवानाम्' इत्यादेरनुषङ्गः ॥

काटश्चार्णवश्च धर्णसिश्च द्रविणं च भगश्चान्तरिक्षं च सिन्धुश्च समुद्रश्च सरस्वांश्च विश्वव्यचाश्च ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मस्स्वाहा । [8]मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मस्स्वा-

[7]प्रसवश्चेति ॥ प्रसवः अनुज्ञा, उपयामः पृथिवी 'इयं वा उपयामः'* इति श्रुतेः, काटः लिङ्गरूपः रुद्रः 'नमः काट्याय'† इति दर्शनात्, अर्णवः उदन्वान् ह्रदादिः, धर्णसिः ग्रहं, द्रविणं धनं बलं वा, भगः आदित्यानामन्यतमः सौभाग्यं वा 'उदयं मामको भगः'‡ इति दर्शनात्, अन्तरिक्षं प्रसिद्धं, सिन्धुः नदी, समुद्रः प्रसिद्धः, सरस्वान् देवताविशेषः अन्वारम्भणीयायां दृष्टः 'पीपिवांसं सरस्वतः, दिव्यं सुपर्णम्'§ इति च, विश्वव्यचाः इन्द्र इत्याहुः 'विश्वव्यचसमवतं मतीनाम्'¶ इति दर्शनात् । एतेषां स्वरूपेण अधिष्ठातृद्वारेण च यथासम्भवं देवतात्वम् । तेशब्दस्यान्वयसिद्ध्यर्थं येशब्दोऽध्याहार्यः । ये ते अनुक्रान्ताः देवाः एषां जम्भे दन्तनामैतत्, जातावेकवचनम्, दन्तेषु भक्षणाय दध्मः प्रक्षिपामः । कम्? यं द्विष्मः यश्च नो द्वेष्टि तम् ॥

[8]मधुश्चेति ॥ वसन्तादीनां षण्णामृतूनां द्वौद्वौ मासौ मध्वादयः । ते इत्यादि पूर्ववत् ॥

*सं. ६-५-८. †सं. ४-५-७. ‡ब्रा. २-७-१६. §सं. ३-१-११.
¶ऋक्सं. ३-४६-४.

हा॑ । [9]चि॒त्तं च॒ चित्ति॒श्चाकू॑तं॒ चाकू॑ति॒श्चाधी॑तं॒ चाधी॑तिश्च॒ विज्ञा॑तं च वि॒ज्ञानं॑ च॒ नाम॑ च॒ क्रतु॑श्च द॒र्शश्च॑ पू॒र्णमा॑सश्च॒ ते यं द्वि॒ष्मो यश्च॑ नो॒ द्वेष्टि॒ तमे॑षां॒ जम्भे॑ दध्म॒स्स्वाहा॑ । [10]भूस्स्वाहा॒ भुव॒स्स्वाहा॒ सुव॒स्स्वाहो३॒ स्वाहा॑ ॥ १० ॥

उ॒दी॒र्ष्वातो॒ दश॑ ॥ १० ॥

[1]अप॑श्यं त्वा॒ मन॑सा॒ चेकि॑ता॒नं॒ तप॑सो जा॒तं

[9]चित्तं चेति ॥ चित्तं अन्तःकरणं, चित्तिः तद्व्यापारः, आकूतं अभिप्रेतं, आकूतिः अभिप्रायः, अधीतं अध्यापनं, अधीतिः अध्ययनं,* विज्ञातविज्ञाने प्रसिद्धे, नाम च क्रतुश्चेति नामरूपे विवक्षिते क्रियत इति क्रतुः । दर्शपूर्णमासौ प्रसिद्धौ । एतेषां देवतात्वं पूर्ववत् । ते इत्यादि च पूर्ववत् ॥

[10]भूस्स्वाहेत्यादिभिः चतुर्भिः वध्वाशिरस्याज्यशेषानयनम्—भूस्स्वाहेति ॥ भूरादयः त्रयो लोकाः । ओमिति ब्रह्म ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने दशमः खण्डः.

---

[1]अथ वधूर्वरं समीक्षते—अपश्यं त्वेति ॥ अपश्यं त्वा त्वां पश्यामि मनसा हृदयेन सस्नेहमित्यर्थः । चेकितानं जानन्तं मदभिनायं तपसः गर्भाधानादेरुपनयनपर्यन्तात् जातं द्विजत्वेन

---

* ' अधीतं ध्यातं अधीतिः ध्यानम् ' इति पा.

**तप॑सो॒ विभू॑तम्। इह प्र॒जामि॒ह र॒यिꣳ ररा॑ण॒ः प्र जा॑यस्व प्र॒जया॑ पुत्रकाम । [2]अप॑श्यं त्वा॒ मन॑सा॒ दीध्या॑ना॒ꣳ स्वायां॑ त॒नूꣳ ऋ॒त्विये॒* नाथ॑मानाम्। उप॒ मामु॒च्चा यु॑व॒तिर्ब॑भूया॒ः प्रजा॑यस्व प्र॒जया॑ पु-**

---

जातं **तपसः** भिक्षाचर्यादेरध्ययनाङ्गभूतात् **विभूतं** विभूतिमत्त्वेन निष्पन्नं विभूतिः श्रीः 'ऋचस्सामानि यजूंषि । सा हि श्रीरमृता सताम्'† इति । **इह प्रजां इह** मम च गृहे **रयिं** धनं **रराणः** ददत् **प्रजया प्रजायस्व** हे **पुत्रकाम**! यत्प्रजाया जन्म तज्जनयितुरेव जन्म । श्रूयते हि 'प्रजामनुप्रजायसे । तदु ते मर्त्यामृतम्'‡ इति ॥

[2]वरो वधूमीक्षते—**अपश्यं त्वेति** ॥ **अपश्यं त्वा** त्वां अहं **मनसा** पश्यापि **दीध्यानां** दीप्यमानां ध्यायन्तीं वा **स्वायां तनूं** स्वस्यां तन्वाम् । सप्तम्याः पूर्वसवर्णदीर्घः । तत्र 'ईदूतौ च सप्तम्यर्थे' इति प्रगृह्यसंज्ञायां सत्यामपि छान्दस ऊकारस्सानुनासिकः । बह्वृचास्तु शुद्धमेवाधीयते । इहापि केचिदूकारात्परमनुस्वारमधीयते । ऊकारान्तस्तु शुद्धः । **ऋत्विये** ऋतुकाले भवो गर्भः ऋत्वियः, ङितीत्येकवचनस्य शेआदेशः । **नाथमानां** प्रार्थयमानां स्वे शरीरे सतो गर्भं प्रार्थयमानामित्यर्थः । उपेत्ययमनुशब्दस्यार्थे द्रष्टव्यः । मां **उच्चा** उच्चं सम्भोगकाले उपरि सन्तं **युवतिः** यौवनावस्थां प्राप्ता त्वं **उपबभूयाः** अनुभूयाः, अनुभूय च **प्रजया प्रजायस्व** हे **पुत्रकामे**! ॥

---

* तनू ऋत्विये, तनूँ ऋत्विये. † ब्रा. १-२-१. ‡ ब्रा. १-५-५.

त्रकामे । [3]सम॑ञ्जन्तु॒ विश्वे॑ दे॒वास्सम॒ापो॒ हृद॑यानि नौ । सं मा॑त॒रिश्वा॒ सं धा॒ता सम॑ु दे॒ष्ट्री॑ दि॒देष्टु॒* नौ ॥ [4]प्रजा॑पते त॒न्वं॑ मे जुषस्व॒ त्वष्ट॑र्दे॒वेभि॑स्स॒हसा॒म इन्द्र । विश्वै॑र्दे॒वै रा॒तिभि॑स्सꣳरराणः पु॒ꣳसां ब॑हू॒नां

[3]उत्तरयाऽऽज्यशेषेण हृदयदेशौ समनक्ति—समञ्जन्त्विति ॥ नौ आवयोः हृदयानि, व्यापारबहुत्वात् बहुवचनम् । विश्वे देवाः समञ्जन्तु सस्नेहानि कुर्वन्तु । आपश्च समञ्जन्तु । मातरिश्वा वायुः सोऽपि समनक्तु । धाता समनक्तु । समित्यस्य देष्ट्रीत्यनेन † सम्बन्धः । उकारोऽनर्थकः । संदेष्ट्री अन्तर्भावितण्यर्थोऽयम् । सन्देशस्य कारयित्री । संदेशः परस्परसंभाषणम् । का पुनः संदेष्ट्री? सरस्वती, संभाषणस्य तदायत्तत्वात् । गर्भाधाने च तस्या व्यापारदर्शनात् 'गर्भं धेहि सरस्वति' ‡ इति । सा संदेष्ट्री दिदेष्टु* । अयमप्यन्तर्भावितण्यर्थः । सन्देशं कारयतु नौ आवयोः सम्भोगकालानुरूपं सम्भाषणं सरस्वती कारयत्वित्यर्थः ॥

[4]अथ जपः—हे प्रजापते! त्वं मे तन्वं तनूं शरीरं जुषस्व सेवस्व प्रविश । येनाहं रेतस्सेके समर्थस्स्यां 'आसिञ्चतु प्रजापतिः' § इति दर्शनात् । हे त्वष्टः! त्वमपि मे तन्वं जुषस्व । देवेभिः देवैः देवाः विष्ण्वादयः 'विष्णुर्योनिं कल्पयतु' § इत्यादिमन्त्रे निर्दिष्टाः तैस्सह । कीदृशस्त्वम्? सहसामः सहेरसानच्, सहसानः, तस्यैव छान्दसो नकारस्य मकारः । रूपनिर्माणे स-

*दिदेष्टीति पा. † दिदेष्ट्वित्याख्यातेन. ‡ १-१३-२. § १-१३-१.

**मातरंस्स्याम । [5]आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं नो भव द्विपदे शं चतुष्पदे । [6]तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्यां वपन्ति।**

---

मर्थ इत्यर्थः, 'त्वष्टा रूपाणि पिंशतु'* इति दर्शनात् । हे **इन्द्र!** त्वमपि मे तन्वं जुषस्व **विश्वैः देवैः** तव **रातिभिः** मित्रभूतैः सह **संरराणः** सम्यगस्मभ्यं अभिमतं ददत् **पुंसां बहूनां मातरः** 'पिता मात्रा' इति पितुरेकशेषे प्राप्ते मातुरेकशेषः छान्दसः, द्वयोश्च बहुवचनम् । मातरौ मातापितरौ **स्याम** स्याव युष्मत्प्रसादादावां बहुपुत्रौ स्यावेत्यर्थः ॥

[5]**आ न इति॥** न इति द्वयोर्बहुवचनम् । **प्रजापतिः** आवयोः **प्रजां आजनयतु** । **आजरसाय** आजरसं आवां **समनक्तु** सस्नेहौ करोतु **अर्यमा** आदित्यः । त्वं च **अदुर्मङ्गलीः** दुष्टानि मङ्गलानि लक्षणानि यस्यास्सा दुर्मङ्गलीः ततोऽन्या अदुर्मङ्गलीः, छान्दसः सुलोपाभावः । सुमङ्गली भूत्वा **पतिलोकं** पत्युर्मम लोकं गृहं **आविश** आवस । **शं नः** इत्यादि गतम् ॥

[6]**तामिति** ॥ हे **पूषन्!** **यस्यां मनुष्याः** बीजं **वपन्ति** शुक्रमुत्सृजन्ति **तां** मे **शिवतमां** अनुकूलतमां कृत्वा **एरयस्व** प्रेरयस्व भार्यां मे प्रोत्साहयेत्यर्थः । भार्यायां हि बीजं वपन्ति अन्यत्र

---

* १-१३-१.

या न॑ ऊ॒रू उ॑श॒ती वि॒स्रया॑तै॒ यस्या॑मु॒शन्त॑ः प्र॒हरे॑म॒ शेफं॑म्* ॥ ११ ॥

शं चतु॑ष्पदे॒ द्वे च॑ ॥ ११ ॥

[1]आरो॑हो॒रुमुप॑बर्हस्व बा॒हुं परि॑ष्वजस्व जा॒या-

---

निषेधात् । सा विशिष्यते—**या नः** 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम् । मह्यं **ऊरू** या **उशती** कामयमाना **विस्रयातै** * विश्रयातै शकारस्य सकारः छान्दसः, पञ्चमो लकारः । विश्रयेत विश्लिष्टौ कुर्यात् तदा हि योनिः विवृता भवति **यस्यां** च एवंभूतायां **उशन्तः** कामयमाना भूत्वा **शेफं*** शिश्नं **प्रहरेम*** प्रक्षिपेम । पूर्ववद्बहुवचनम् ॥

इति श्रीहरदत्तविरचितैकाग्निकाण्डमन्त्रव्याख्याने एकादशः खण्डः.

---

[1]अथ समावेशनकाले जपः । अन्यो वैनामभिमन्त्रयेत—**आरोहोरुमिति** ॥ जपपक्षे तावदात्मन एवायमन्तरात्मनः प्रैषः । हे मदीयशरीरात्मन् ! अस्या **ऊरुं आरोह**, आरुह्य च आत्मनो **बाहुं** बाहू **उपबर्हस्व** उपबर्हणमालिङ्गनं इह तु तदर्थं प्रसारणम् । आलिङ्गनाय बाहू प्रसारय । प्रसार्य च **परिष्वजस्व जायां** तस्यां **सुमनस्यमानः** प्रीयमाणो भूत्वा तथाहि प्रजा रूपादिसमृद्धा भवति । पुष्यतामित्यादि जायया सहाभिधानम् । हे जाये! मदीयशरीरात्मन्! युवां **पुष्यतं** पुष्टौ भवतं **मिथुनौ** मिथुनीभूतौ

---

* विस्रयाते...प्रहराम शेपम्. पा.

[2] सुमनस्यमानः । तस्यां पुष्यतं मिथुनौ सयोनी बह्वीं प्रजां जनयन्तौ सरेतसा । [2]आर्द्रयाऽरण्या यत्रामन्थत्पुरुषं पुरुषेण शक्रः । तदेतौ मिथुनौ सयोनी प्रजयाऽमृतेनेह गच्छतम् । [3]अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं

---

**सयोनी** सङ्गतोपस्थेन्द्रियौ **बह्वीं प्रजां जनयन्तौ सरेतसा** सरेतसौ चिरकालमविच्छिन्नेन्द्रियौ । एषैवानयोः पुष्टिः । यद्गुत प्रजासमृद्धिः । अभिमन्त्रणपक्षे तस्यामित्यन्तं पत्युरभिमन्त्रणं, शिष्टं द्वयोः ॥

[2]**आर्द्रयेति** ॥ अत्रापि जपपक्षे शरीरान्तरात्मनोऽभिधानम् । यत्रेति यथाऽर्थे । यथा कश्चित् **आर्द्रया** आज्याक्तया **अरण्या** अग्निं **अमन्थत्** एवं **शक्रः** इन्द्रः, उपलक्षणमेतत्, पूर्वो विवाहस्य कर्ता इन्द्रादिः **पुरुषेण** पुरुषलक्षणेन शेफेन **पुरुषं** पुमांसं गर्भममन्थत् मंथनसदृशेन व्यापारेण निष्पादितवान् । **तत्** तद्वत् **एतौ मिथुनौ** मिथुनीभूतौ युवां **सयोनी** सङ्गतोपस्थेन्द्रियौ सन्तौ **प्रजया अमृतेन** प्रजारूपेणामृतेन 'प्रजामनुप्रजायसे । तदु ते मर्त्यामृतम्* इति श्रुतेः । इह गृहस्थाश्रमे स्थितौ **गच्छतं** केवलोऽप्ययं गमिः संपूर्वस्यार्थे द्रष्टव्यः, सङ्गच्छतं सङ्गतौ भवतम् ॥

[3]**अहमिति ॥ ओषधीषु गर्भं अदधां** दधामि श्रौतस्मार्तकर्मानुष्ठानद्वारेण ।

---

* त्रा. १-९-५.

**प्र॒जा अं॑जनयं पि॒तॄणाम॒हं ज॒निभ्यो॒ अव॒रीषु॑* पु॒त्रान् । [4]पु॒त्रिणे॒मा कु॑मा॒रिणा॒ विश्व॒माॆयु॒र्व्य॑श्नुतम् । उ॒भा हिर॑ण्यपेशसा वी॒तिहो॑त्रा कृ॒तद्व॑सू । [5]द॒श॒स्यं-**

अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ॥†

इति । **अहमेव** च **विश्वेषु भुवनेषु अन्तः** अवस्थितः परमात्मद्वारेण स्वरूपेण वा । एवम्भूतः **अहं पितॄणां** अर्थाय **प्रजा अजनयं** जनयामि । **अहमेव जनिभ्यः** जन्याः अस्या वध्वाः **अवरीषु** अवरासु‡ पश्चात्कालभाविनीषु स्नुषासु **पुत्रान्** जनयामि । पुत्रोत्पादनद्वारेण पौत्रा अपि मे सन्त्वित्यर्थः । तदेतज्जपपक्षे यथाश्रुतमेव । अभिमन्त्रणपक्षे तु प्रयुक्तिद्वारेण, प्रयुक्तिश्चा§भिमन्त्रणमेव ॥

[4]**पुत्रिणेमेति** ॥ पुत्रिणाविमौ । पुत्रिणेति द्विवचनस्याकारः । पुत्रिणौ **इमा** इमौ युवां **कुमारिणा** कुमारीभिः दुहितृभिः तद्वन्तौ **विश्वमायुः** 'स ह षोडशं वर्षशतमजीवत्'¶ इत्येवं रूपं **व्यश्नुतं** प्राप्नुतम्, **उभा** उभौ **हिरण्यपेशसा** पेश इति रूपनाम, परिशुद्धवर्णौ **वीतिहोत्रा** वीतिरिति हविर्नाम, हविषा होतारौ **कृतद्वसू** । दकारः छान्दस उपजनः । **कृतवसू** कृतधनौ ॥

[5]**दशस्यंत्वेति** ॥ **दशस्यतिः** दानकर्मा, वकार उपजनः । बह्वृचास्तु वकारं न पठन्ति । **दशस्यंता** अर्थिभ्योऽपेक्षितानि ददतौ

*अपरीषु. पा. †मनु. ३-७६. ‡अपरीषु अपरासु. पा.
§प्रयुक्तद्वारेण, प्रयुक्तश्चा. पा. ¶छा. ३-१६-७.

त्वाऽमृताय कꣳ शमूधो रोमशꣳ हथो देवेषु कृ-
णुतो दुवः ॥ १२ ॥

आरोह नवं ॥ १२ ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु ।

**अमृताय** अमरणाय देवत्वप्राप्तये **कं** अनर्थकोऽयं निपातः पादपूरणश्छान्दसः । **शं** सं सकारस्य शाकारश्छान्दसः, बह्वृचास्तु सकारमेव पठन्ति । **ऊधः** ऊधस्थानीयं उभयोः उपस्थेन्द्रियं **रोमशं** अनेन उपभोगयोग्यता लक्ष्यते, रोमोत्पत्तेः प्राक् अनुपभोग्या हि स्त्रियः । तथा च भावयव्यस्य राज्ञो भार्यां भावयव्यानीमिन्द्रः पत्युस्सखा परिहसन् उवाच उपभोगयोग्या त्वं न भवसि रोमाणि ते नोत्पन्नानीति । सा तमब्रवीत्—

उपोप मे परामृश मा मे दभ्राणि मन्यथाः ।

सर्वाऽहमस्मि रोमशा गन्धारिणामिवाविका ॥ * इति ॥ तद्रोमशामूधः **संहथः** । लोडर्थे लट् । संहतं संश्लिष्टं कुरुतमित्यर्थः । किंच—**देवेषु दुवः** परिचरणं **कृणुतः** कुरुतम् । पूर्ववल्लोडर्थे लट् पुरुषव्यत्ययश्च । कृणुतं देवान्परिचरतमित्यर्थः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने द्वादशः खण्डः.

---

[1]अथ ऋतुसमावेशने भार्याया अभिमन्त्रणम्—**विष्णुर्योनिमिति** ॥ **विष्णुः** ते तव **योनिं कल्पयतु** गर्भाधानक्षमां करोतु । प्रजा-

*ऋक्सं. १-१२६-७.

**आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।[2] गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ।[3] हिरण्ययी अरणी यं निर्मन्थतो अश्विना । तं ते गर्भꣳ हवामहे दशमे मासि सूतवे ।[4] यथेयं पृथिवी मही तिष्ठन्ती गर्भ-**

---

**पतिश्च** मामाविश्य तत्र रेतः **आसिञ्चतु** । तच्च निषिक्तं रेतः **धाता** आदित्यानामन्यतमः प्रजापतिरेव वा **गर्भं दधातु** गर्भरूपेण परिणमयतु । तस्य च **रूपाणि** हस्तपादादीनि **त्वष्टा पिंशतु** दीप्तिकर्माऽयम्, 'नक्षत्रेभिः पितरो द्यामपिंशन्'* इति दर्शनात्, दीप्तानि करोतु ॥

[2]**गर्भं धेहीति** ॥ सिनीवाल्या सरस्वत्या च अधिष्ठिता वधूरेव तथाऽभिमन्त्र्यते । **धेहि** धारय । **अश्विनौ** च **देवौ ते** तव **गर्भं आधत्तां पुष्करस्रजा** पुष्करमालिनौ ॥

[3]**हिरण्ययी अरणीति** ॥ तृतीयैकवचनस्य पूर्वसवर्णः । हिरण्यय्या अरण्या तत्सदृशेन प्रजननेन **यं** यादृशं गर्भं **निर्मन्थतः** प्रयत्नेन जनितवन्तौ **अश्विना** अश्विनौ **तं** तादृशं **ते गर्भं हवामहे** आशास्महे **दशमे मासि सूतवे** सोतुम्, अश्विनौ रूपवन्तौ तत्पुत्रोऽपि रूपवान् तादृशस्ते गर्भो भवत्वित्यर्थः ॥

[4]**यथेयमिति** ॥ **पृथिवी यथा मही** महती **तिष्ठन्ती** यथेयमि-

---

*ऋक्सं. १०-६८-११.

**मादधे । एवं त्वं गर्भमाधत्स्व दशमे मासि सूत-
वे । [5]यथा पृथिव्यग्निगर्भा द्यौर्यथेन्द्रेण गर्भिणी ।
वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते । [6]वि-
ष्णो श्रेष्ठेन रूपेणास्यां नार्यां गवीन्याम् । पुमाꣳ-
सं गर्भमाधेहि दशमे मासि सूतवे । [7]नेजमेष प-**

---

दानीं तिष्ठति तथैव तिष्ठन्ती उत्ताना सतीत्यर्थः । उत्तानेत्येव बह्वृचानां पाठः । **गर्भमादधे** द्युलोकतो निषिक्तं वृष्टिलक्षणं रेतो गृहीत्वा सस्यलक्षणं गर्भं पृथिवी यथा धारयति **एवं त्वं गर्भं आधत्स्व** धारय । **दशमे मासि** इति गतम् ॥

[5]**यथा पृथिवीति** ॥ पार्थिवेषु अरण्यादिषु अग्नेरवस्थानात् पृथिवी अग्निगर्भेत्युच्यते, द्युलोके इन्द्रः प्रधानभूतः, सः तस्याः गर्भत्वेन निरूप्यते, वायुश्च दिग्भ्यः प्रभवति, तेनासौ तासां गर्भः, यथा आसां एते गर्भाः **एवं गर्भं दधामि ते** ॥

[6]**विष्णो इति** ॥ हे **विष्णो! श्रेष्ठेन रूपेण** युक्तं **पुमांसं गर्भं अस्यां नार्यां आधेहि** । कीदृश्यां नार्याम्? **गवीन्यां** कमेरेतद्रूपम् । कमनीयायां काम्यायां कामयितुं योग्यायां ऋतुस्नातायामित्यर्थः । अन्ये तु गविनीति स्त्रीणां वीर्यातिशयस्याभिधानं मन्यन्ते 'वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ '* इति दर्शनात् । अस्यां नार्यां या गविनी तस्यामित्यर्थः । **दशमे मासीति** गतम् ॥

---

*तै. सं. ३-३-१०.

रांपत सपुंत्रः पुनरापंत । अस्यै मे पुत्रकांमायै गर्भमाधेहि यः पुमान् । [8]व्यस्य योनिं प्रति रेतो गृहाण पुमान्पुत्रो धीयतां गर्भो अन्तः । तं माता दशमासो बिभर्तु स जायतां वीरतमस्स्वानाम् । [9]आ ते गर्भो योनिमेतु पुमान्बाणं इवेषुधिम् । आ

[7]नेजमेषेति ॥ स्कन्द*ग्रहेष्वन्यतमः नेजमेष इतीतिहासपुराणयोः प्रसिद्धः । तथाच वैद्यके 'कुमारग्रहपीडायां नेजमेषं च पूजयेत्' इति पठ्यते । हे **नेजमेष! परापत** परागच्छ त्वं हि गर्भस्य दूषकः । यद्यवश्यमागन्तव्यं **सपुत्रः पुनरापत** पुत्रं गृहीत्वा आगच्छ । आगत्य च **अस्यै मे** मम स्वभूतायां अस्यां पुत्रकामायां **गर्भमाधेहि** । कीदृशं? **यः पुमान्** ॥

[8]**व्यस्येति** ॥ मया निषिच्यमानं **रेतः** त्वं **योनिं व्यस्य** विक्षिप्य विवृत्य **प्रतिगृहाण** । तथा सति ते **अन्तः गर्भो धीयतां**, स च **पुमान् पुत्रः धीयताम्** । तं च **माता** त्वं **दशमासः** मासशब्दस्य अयं 'पद्दन्' इत्यादिसूत्रेण मासादेशः । दशमासान् **बिभर्तु**, पुरुषव्यत्ययः, बिभृहि । स च **स्वानां** ज्ञातीनां मध्ये **वीरतमः** भूत्वा **जायताम्** ॥

[9]**आ त** इति ॥ **ते** तव **योनिं पुमान् गर्भः एतु** आगच्छतु । क इव? **बाण इव इषुधिं** इषवो यत्र धीयन्ते तं यथा बाणः प्रविशति तद्वत् । यदा चासौ **दशमास्यो** भवति दशमासभृ-

*सन्धि.

वीरो जायतां पुत्रस्ते दशमास्यः ॥ १३ ॥
गर्भं दधामि तेऽष्टौ च ॥ १३ ॥

[1]करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते । अनूनः पूर्णो जायतामश्लोणोऽपिशाचधीतः । [2]पुमांस्ते पुत्रो नारि तं पुमाननुजायताम् । तानि

तो भवति ततः ते पुत्रः वीरः वीर्ययुक्तो भूत्वा आजायताम् ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने त्रयोदशः खण्डः.

---

[1]करोमीति ॥ ते प्राजापत्यं प्रजापतिकर्म रेतसः सेचनं 'आसिञ्चतु प्रजापतिः'* इति दर्शनात् । ततो करोमि । ततश्च गर्भः ते तव योनिमैतु । स च अनूनः अन्यूनाङ्गः पूर्णः पूर्णकालः दशमास्यः जायतां अश्लोणः अपङ्गुः अबधिरो वा, अपिशाचधीतः धीयतेर्ध्यायतेर्वा धीतः यः पिशाचैः धीतः† ध्यातो वा स न भवतीति ॥

[2]पुमानिति ॥ हे नारि! पुमांस्ते पुत्रः 'जायताम्' इति वक्ष्यमाणमपेक्ष्यते । प्रथमस्तावद्गर्भः पुमान्भवतु तं च पुमानेव अनुजायतां द्वितीयादयोऽपि गर्भाः पुमांस एव भवन्त्वित्यर्थः । तानि तादृशानि भद्राणि कल्याणानि अमोघानि बीजानि वीर्याणि ऋषभाः ऋषभवत्सेचनसमर्थाः । के पुनस्ते? प्रजापत्यादयः ओषधयो वा माषादयः वृष्ट्या जनयन्तु नौ

---

* १-१३-१. † पीतः, पीडित इति वा.

**भद्राणि बीजान्यृषभा जनयन्तु नौ । [3]यानि भद्राणि बीजान्यृषभा जनयन्ति नः । तैस्त्वं पुत्रान् विन्दस्व सा प्रसूर्धेनुका भव । [4]कामसमृध्यतां मह्यमपराजितमेव मे । यं कामं कामये देव तं मे वायो समर्धय । [5]अनुहवं परिहवं परीवादं परिक्ष-**

आवयोः यथा पुत्रा एव उपर्युपरि जायन्ते तादृशानि वीर्याणि आवयोरुत्पादयन्तु ॥

[3]**यानीति** ॥ पूर्वोक्ताः **ऋषभाः यानि भद्राणि बीजानि नः** 'अस्मदो द्वयोश्च' इति बहुवचनम्, **नौ जनयन्ति तैः** बीजैः **त्वं पुत्रा**नेव **विन्दस्व सा त्वं प्रसूः** प्रसवशीला **धेनुका** धेनुसदृशी **भव** । यथा धेनुः वत्सेन पीयते एवं त्वं पुत्रेण नित्यं पयिमाना भव ॥

[4]**कामप्रमिति** ॥ प्रा पूरणे, कामान्पूरयतीति **कामप्रं मह्यं** ममेदं कर्म **ऋध्यतां** ऋद्धमस्तु, **अपराजितमेव** अमोघमेव मे भवतु । हे **देव! वायो! यं कामं कामये** पुमांसं जनयेयमिति **तं मे कामं समर्धय** समृद्धं कुरु । वायुप्रेरितं रेतस्सिच्यत इति स एवं प्रार्थ्यते ॥

[5]अर्धप्राध्वस्य परिक्षवपरिकासनयोः जपः—**अनुहवमिति** ॥ पृष्ठत आह्वानं **अनुहवः** सर्वत आह्वानं **परिहवः** निन्दितो वादः **परीवादः** 'छिन्धि भिन्धि'* इत्यादिः परितः क्षवथुः **परिक्षवः**, मन्त्रे

*आ. ४-२७.

पम् । दुस्स्वप्नं दुरुदितं तद्द्विषद्भ्यो दिशाम्यहम् । [6]अनुहूतं परिहूतꣳ शकुनेर्यदशाकुनम् । मृगस्य सृतमक्षणया तद्द्विषद्भ्यो दिशाम्यहम् । [7]आरात्ते अग्निरस्त्वारात्परशुरस्तु ते । निवाते त्वाऽभि वर्षतु स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पते । [8]नमश्शकृत्सदे रुद्राय नमो रुद्राय शकृ-

---

तु छान्दसो वकारस्य पकारः । दुस्स्वप्नः प्रसिद्धः दुरुदितं वैधवेया।दिशब्दोच्चारणम्, यच्चान्यदेवं दुर्निमित्तं तत् द्विषद्भ्यो दिशाम्यहं अतिसृजामि ॥

[6]यदिति ॥ यत् अनुहूतं यच्च परिहूतं यच्च शकुनेः सम्बन्धि अशाकुनं अनिमित्तभूतं यच्च मृगस्य सृगालादेः अक्षणया सृतं तिर्यग्गमनं अपसव्यादि तच्च द्विषद्भ्यो दिशाम्यहम् । शकुनं निमित्तं शाकुनं, तत्प्रतिपक्षभूतं अशाकुनं दुर्निमित्तम् ॥

[7]चित्रियस्य वनस्पतेरभिमन्त्रणम्—आरात्त इत्यादि ॥ हे वनस्पते! ते तव आरात् दूरतः अग्निरस्तु । एवं परशुरपि ते दूरतोऽस्तु । वाताभावो निवातः, तादृशे निवाते सति देवः त्वा त्वां अभिवर्षतु वाते सति भङ्गप्रसङ्गः, एवं ते स्वस्त्यस्तु वनस्पते! एवं ममापि स्वस्त्यस्तु वनस्पते! त्वदभिमन्त्रणात् ॥

[8]शकृद्दीतेरुपस्थानम्—नमश्शकृत्सदे इति ॥ शकृति सीदते रुद्राय, आदरार्थं पुनर्वचनम्, नमो रुद्राय शकृत्सदे। हे शकृत्!

थ्सदे । गोष्ठमसि नमस्ते अस्तु मा मां हिंसी-[9]स्सिगसि नासि वज्रो नमस्ते अस्तु मा मां हिंसीः । [10]उद्गातेवं शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । स्वस्ति नश्शकुने अस्तु प्रति नस्सुमना भव ॥ १४ ॥

अहमष्टौ च ॥ १४ ॥

---

त्वं गोष्ठमसि गवि स्थितमसि नमस्ते अस्तु मा मा हिंसीः, गावोपि न किंचिदपि हिंसन्ति, त्वं च गोष्ठमसि ॥

[9]सिग्वातस्याभिमन्त्रणम्—सिगसीति ॥ सिक् वस्त्रस्य दशा असि सिगेव त्वमसि, नासि वज्रः नासि वज्रः न वज्रस्त्वमासि, छान्दसं पररूपम् । नमस्ते इत्यादि गतम् ॥

[10]शकुनेरभिमन्त्रणम्—उद्गातेति ॥ हे शकुने! त्वं उद्गातेव साम गायसि यथा उद्गाता साम गायति तद्वत् त्वं गायसि । किंच—शंससि प्रशस्तं वदसि ब्रह्मपुत्र इव सवनेषु ब्रह्मपुत्रः ब्रह्मवर्गोद्भवो ब्राह्मणाच्छंसी, स यथा उक्थ्यादिसंस्थासु त्रिष्वपि सवनेषु शंसति तद्वत् । यज्ञवाची सवनशब्दः । किञ्च—हे शकुने! नः अस्मभ्यं स्वस्त्यस्तु, नः अस्मान् च प्रति त्वं सुमना भव ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने चतुर्दशः खण्डः.

[1]प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातस्सोममुत रुद्रꣳ हुवेम । [2]प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह । [3]भग प्रणेतर्भग सत्यराधो भगेमां धियमुदव ददन्नः ।

---

[1]दम्पत्योः हृदयविश्लेषे हृदयसंसर्गेप्सोर्होमः—**प्रातरग्निमिति** ॥ अग्न्यादयः प्रसिद्धाः । तान् **प्रातः हवामहे** आह्वयामः रक्षार्थम् । **उत रुद्रं हुवेम** अपि रुद्रं प्रातराह्वयामः ॥

[2]**प्रातर्जितमिति** ॥ प्रातः प्रातःकाले जयतीति **प्रातर्जित्** तं **भगं** आदित्यानामन्यतमं **उग्रं** अनभिभवनीयं **वयं हुवेम** आह्वयामः **पुत्रं अदितेः** आदित्यं **यो विधर्ता** सर्वस्य धारयिता वृष्ट्यादिना । **आध्रः** दरिद्रः **तुरः** त्वरमाणः । चिच्छब्दोऽप्यर्थे । भक्षीति भजेर्लिङर्थे लुङि रूपम् । आध्रोपि त्वरन्नपि राजाऽपि **मन्यमानः** जानानश्चेत् **यं** भगं इत्थमाह । कथम्? **भगं भक्षि** भगं भजेयेति जानानः सर्व एव यस्य भक्ततामाशास्ते इत्यर्थः ॥

[3]**भग प्रणेतरिति** ॥ हे **भग**! सर्वस्य **प्रणेतः**! आदरार्थं पुनःपुनरामन्त्र्यते। **भग! सत्यराधः**! राध इति धननाम। **भग! इमां धियं** येयं मम बुद्धिः सपत्नीं बाधेयेति तां सपत्नीबाधनं वा **उदव** उत्तिष्ठमानो भूत्वा रक्षतात् पर्यायेण रक्ष **ददत् नः** अस्म-

**भग प्रणो जनय गोभिरश्वैर्भग प्रनृभिर्नृवन्तस्स्याम। [4]उतेदानीं भगवन्तस्स्यामोत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन्थ्सूर्यस्य वयं देवानाꣳ सुमतौ स्याम । [5]भग एव भगवाꣳ अस्तु देवास्तेनं वयं भगवन्तस्स्याम । तं त्वा भग सर्व इज्जोह-**

---

भ्यं अभिमतं ददत् । हे **भग**! त्वं **नः** अस्मान् **गोभिरश्वैश्च प्रजनय** समृद्धान् कुरु । हे **भग**! त्वत्प्रसादात् वयं **नृभिः** दासादिभिः **नृवन्तः प्र**कर्षेण **स्याम** ॥

[4]**उतेति** ॥ **इदानीं** अस्मिन् कर्मकाले वयं भगेन देवेन तद्वन्तः **स्याम। उत प्रपित्वे** अपि सायाह्ने **उत मध्ये अह्नां** मध्याह्नेऽपि **उत** अपि **उदिता** उदयः उदितं तस्मिन् उदिता सप्तम्येकवचनस्याकारः । हे **मघवन्**! मघ इति धननाम, धनवन्! कस्योदये? **सूर्यस्य** पूर्वाह्नादिषु त्रिष्वपि कालेषु वयं भगवन्तस्स्यामेत्यर्थः । किंच— **वयं देवानां सुमतौ** शोभनायां मतौ अनुग्रहात्मिकायां बुद्धौ **स्याम,** भगस्यैव प्रसादात् अन्ये देवा अपि अस्माननुगृह्णीयुरित्यर्थः ॥

[5]**भग एवेति** ॥ हे **देवाः**! देवः भगः सः स्वयं **भग एव** सन् **भगवानस्तु** भगेन देवेन तद्वानस्तु, एवं नाम तद्वत्त्वं श्लाघनीयमित्यर्थः । **तेन** भगेन **वयं भगवन्तस्स्याम** । हे **भग**! य एवम्भूतोसि **तं त्वा** त्वां **सर्व इत्** सर्व एव जनो **जोहवीमि,** पुरुषव्यत्ययः।

वीमि स नो भग पुरएता भवेह । [6]समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आवहन्तु । [7]अश्वावतीर्गोमतीर्न उषासो वीरवतीस्सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीना यूयं पात

---

जोहवीति । बह्वृचाः तथैवाधीयते । हे **भग! स** त्वं **नः** अस्माकं **पुरएता** नेता **भव इह** कर्मणि ॥

[6]**समध्वरायेति** ॥ तस्यैव भगस्य प्रसादेन उषसोपि **अध्वराय** अस्मै सपत्नीबाधनरूपाय यज्ञाय **समनमन्त,** लोडर्थे लङ्, संनमन्तां भजन्तामित्यर्थः । **दधिक्रावेव** दधिक्रावा अग्निः आप इत्यन्ये* । स यथा **शुचये पदाय** शुद्धाय स्थानाय कल्पते तद्वत् । किञ्च—**वसुविदं** वसुनो लम्भयितारं **भगं नः** अस्मान्प्रति **अर्वाचीनं** अभिमुखं **आवहन्तु** के? **वाजिनः** वेगवन्तः **अश्वा रथमिव** यथा रथं अश्वा वहन्ति तद्वत् ॥

[7]उत्तरा ऋक् वैश्वदेवी—**अश्वावतीरिति** ॥ **उषासः** उषसः अश्ववत्यः गोमत्यः वीरवत्यश्च भूत्वा **उच्छन्तु** व्युच्छन्तु व्युष्टा भवन्तु **सदं** सदा नित्यामित्यर्थः । **घृतं,** उपलक्षणमेतत्, 'क्षीरं सर्पिः मधूदकम्'† इत्यादि **दुहानाः विश्वतः** सर्वतः **प्रपीनाः** प्रवृद्धाः ये अस्मिन्सूक्ते

---

*अश्व इत्यन्ये. आदित्य इत्यन्ये. †ब्रा. १-४-८.

**स्वस्तिभिस्सदा नः ॥ १५ ॥**

**भवेह चत्वारि च ॥ १५ ॥**

**[1]इमां खनाम्योषधीं वीरुधं बलवत्तमाम् । यया सपत्नीं बाधते यया संविन्दते पतिम् । [2]उत्तानपर्णे सुभगे सहमाने सहस्वति । सपत्नीं मे पराधम**

---

निर्दिष्टाः अग्न्याद्यः ते **यूयं नः** अस्मान् **स्वस्तिभिः सदा पात** रक्षत ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने पञ्चदशः खण्डः.

---

[1]पत्युर्वशीकरणे पाठाया उत्पाटन*मन्त्रः—**इमां खनामिति** ॥ **इमां** पाठाख्यां **ओषधीं खनामि** उत्पाटयामि । **वीरुधं** विविधं रोहन्तीं प्रतानवतीमित्यर्थः । **बलवत्तमां** अतिशयेन वीर्यवतीमित्यर्थः । **यया** ओषध्या **सपत्नीं बाधते** सर्व एव स्त्रीजनः, **यया** च सम्यक् **विन्दते** असाधारणं लभते **पतिम्** ॥

[2]उत्तराभिः तस्याः पाठाया अभिमन्त्रणम्—**उत्तानपर्णे** इति ॥ उत्तानानि पर्णानि यस्यास्सा उत्तानपर्णा हे **उत्तानपर्णे**! **सुभगे**! सौभाग्यस्य निमित्तभूते! **सहमाने**! सह मर्षणे, अभिभवे छन्दसि। सपत्नीं बाधमाने! **सहस्वति**! अतिबलवति! **सपत्नीं मे पराधम** मम सपत्नीं परागमय **पतिं मे केवलं कृधि** ममैवासाधारणं कुरु ॥

---

*उत्पादन.

पतिं मे केवलं कृधि । [3]उत्तराऽहमुत्तर उत्तरेदुत्तरा-भ्यः । अथा सपत्नी या ममाधरा साऽधराभ्यः । [4]न ह्यस्यै नाम गृभ्णामि नो अस्मिन्रमते जने । परामेव परावतꣳ सपत्नीं नाशयामसि । [5]अहमस्मि सहमानाऽथ त्वमसि सासहिः । उभे सहस्वती भूत्वा सपत्नीं मे सहावहै । [6]उप तेऽधाꣳ सह-

---

[3]उत्तरेति ॥ हे उत्तरे! उत्कृष्टे! पाठे! उत्तरा उत्कृष्टा अहं स्वत एव, पुनरपि उत्तराभ्योपि उत्तरा भूयासम्, इच्छब्द एवार्थे । तथैव बह्वृचाः पठन्ति । अथ या मम सपत्नी सा अधराभ्योप्यधरा भवतु ॥

[4]न हीति ॥ अस्यै अस्याः नामाप्यहं न गृह्णामि । किं कारणं? अस्मिन् जने आत्मन एवायं निर्देशः, सा नो रमते यतः । किं बहुना? परामेव परावतं परावदिति दूरनाम अत्यन्तं दूरं सपत्नीं नाशयामसि नाशयामः गमयामः । 'इदन्तो मसि' ॥

[5]उत्तरया तां पाठां द्विधा कृत्वा हस्तयोरानधाति—अहमस्मीति ॥ सहमाना सपत्नीः अभिभवन्ती अहमस्मि। अथ पाठे! त्वं असि सासहिः सहमानाऽसि । ते उभे आवां सहस्वती बलवत्यौ भूत्वा सपत्नीं मे सहावहै अभिभवाव ॥

**मानामभि त्वांऽधां<sup></sup> सहीयसा । मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु॥१६॥**

**सहावहै द्वे च॥१६॥**

**[1]उदसौ सूर्यो अगादुदयं मामको भगः । अहं**

---

[6]उत्तरया शय्याकाले बाहुभ्यां भर्तारं परिगृह्णीयात्—**उप तेऽधामिति** ॥ भर्तारं प्रतीदमुच्यते । इमां **सहमानां** ते तव **उपाधां** अधोऽधां तामेव **त्वा अभ्यधां** तवोपर्यधां **सहीयसा** अतिशयेनाभिभवित्रा मनसा युक्ता । एवंच तथा परिग्रहः कर्तव्यः यथैको हस्तो भर्तुरधो निहितो भवति अपरश्चोपरि । एवं कृते सति **मामनु** मां प्रति ते मनः **प्रधावतु वत्सं गौरिव** यथाऽचिरप्रसूता गौः वत्सं प्रति धावति, तथा **पथा वारिव** यथा च निम्नेन पथा वारि धावति तद्वत् ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने षोडशः खण्डः.

---

[1]सपत्नीबाधनार्थमुत्तरेणानुवाकेन अहरहरादित्यमुपतिष्ठते—**उदसौ सूर्य इति** ॥ **असौ सूर्यः उदगात्** । तमनु **मामकः** मम स्वभूतः **भगः** सौभाग्यं उपस्थेन्द्रियं वा । उच्छब्दस्य पुनःश्रुतेः अगात् इत्यपेक्षते । यथाऽयं सूर्यः प्रवर्धमानः उदेति एवं मम भगोपि उदेत्वित्यर्थः । **तत्** तस्मात्कारणात् **अहं विद्वला** वेदनं वित् तद्वती अनया विद्यया तद्वती **पतिं**

तद्विद्वला पंतिमभ्यंसाक्षि विषासहिः । [2]अहं केतु-रहं मूर्धाऽहमुग्रा विवाचंनी । ममेदनु क्रतुं पतिं-स्सेहानायां उवाचरेत् । [3]ममं पुत्राश्शंत्रुहणोऽथो मे दुहिता विराट् । उताहमंस्मि संजया पत्युंर्मे श्लोकं उत्तमः । [4]येनेन्द्रो हविषा कृत्यंभवद्दिव्युंत्त-

---

अभ्यसाक्षि । सहेरेतद्रूपम् । अभिभूतवत्यस्मि वशीकृतवत्यस्मि । **विषासहिः** विशेषेणाभिभवित्री ॥

[2]**अहमिति** ॥ **अहं केतुः** अहमेव उभयोरपि वंशयोः केतुस्थानीया, अहमेव **मूर्धा** मूर्धस्थानीया, **अहमुग्रा** अनभिभवनीया **विवाचनी** विवाचनं निर्णयः तस्य कारयित्री । किञ्च— **ममेत्** ममैव **क्रतुं** कर्म प्रज्ञानं वा **पतिः अनूवाचरेत्** छान्दसो वकारः । उपाचरेत्, तथैव बह्वृचाः पठन्ति । अनुतिष्ठतु । कीदृश्याः? **सेहानायाः** । लिटः कानचि रूपमेतत् । अभिभूतवत्याः अभिभवन्त्या वा यथा मया ज्ञातं यथा वा मया कृतं तथैवं पतिरपि करोत्वित्यर्थः ॥

[3]**ममेति** ॥ **मम पुत्राः शत्रुहणः** शत्रूणां हन्तारो भवन्तु । **अथो मे दुहिता** च **विराट्** विराजमाना भवतु । **उत** अपि च **अहमस्मि** लोडर्थे लट्, असानि **सञ्जया** सम्यग्जयित्री सपत्नीनां, तथा **पत्युः**, सप्तम्यर्थे षष्ठी पत्यौ, तथैव बह्वृचाः पठन्ति **श्लोकः** यशश्श्लाघा **उत्तमोस्तु** पतिरपि मामेव श्लाघतामित्यर्थः ॥

[4]**येनेन्द्र इति** ॥ **इन्द्रः येन हविषा कृती** कृतकृत्यः **अभवत्**

**मः । अहं तदंक्षि देवा असपत्ना किलांभवम् ।**
**[5]असपत्ना संपत्नघ्नी जयंन्त्यभिभूवरीः । आविंथ्सि सर्वांसाꣳ राधो वर्चों अस्थेंयसामिव । [6]सम॑जैष-मिमा अहꣳ सपत्नीरभिभूवरीः । यथाऽहमंस्य वीरस्यं विराजांमि धनंस्य च ॥ १७ ॥**

**अस्थेंयसामिव द्वे चं ॥ १७ ॥**

---

**दिवि** च **उत्तमः** अभवत् । अहमपि तत् हविः **आक्षि** करोतेर्लुङि 'मन्त्रे घस' इत्यादिसूत्रेण च्लेर्लुकि रूपं, अक्रुषि । हे **देवाः** ! ततश्च **असपत्ना किल अभवम्**, किल प्रसिद्धौ ॥

[5]**असपत्नेति** ॥ **असपत्ना** अप्रतिपक्षा **सपत्नघ्नी** छान्दसं ह्रस्वत्वम्, सपत्नीनां हन्त्री **जयन्ती** जयशीला **अभिभूवरीः** भवतेः क्वनिपि वनो रच, अभिभवनशीला **आवित्सि** आच्छिद्य लब्धवत्यस्मि **सर्वासां** सपत्नीनां **राधः** धनं **वर्चः** कान्तिं च **अस्थेयसामिव** स्थेयांसः स्थिरतराः ततोऽन्ये अस्थेयांसः तेषां धनं यथाऽन्ये हरन्ति तद्वत् ॥

[6]**समिति** ॥ **इमाः सपत्नीः अहं समजैषं** सञ्जयेयं **अभिभूवरीः**, छान्दसः सुलोपाभावः । 'सुमङ्गलीरियम्'* इतिवत् । अभिभूवर्यहं अभिभूवरीः सपत्नीर्वा यथा सञ्जयेयं, तथा सति **अहं अस्य वीरस्य** पत्युः **धनस्य** च **विराजामि** ईश्वरा भवामि ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने सप्तदशः खण्डः.

---

*१-९-५.

[1]अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि । यक्ष्मꣳ शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते । [2]ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्योऽनूक्यात् । यक्ष्मं दोषण्यमꣳसाभ्यां बाहुभ्यां विवृहामि ते । [3]आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर् हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो

---

[1]यक्ष्मगृहीतां वधूं अन्यां वा स्वस्रादिकां पुष्करसंवर्तमूलैः रुक्तैर्मन्त्रैः यथालिङ्गमङ्गानि संमृज्य प्रतीचीनं निरस्येत्— अक्षीभ्यामिति ॥ अधिशब्दोऽनर्थकः । ते तव **शीर्षण्यं यक्ष्मं** विवृहामि संमृज्य निरस्यामि । एवं सामान्येनोपदिष्टस्य विभज्यवचनं—**अक्षीभ्यामित्यादि** । अक्ष्यादयः प्रसिद्धाः । **मस्तिष्कः** कपालान्तर्गतं मांसम् ॥

[2]**ग्रीवाभ्य इति** ॥ **ग्रीवा** कण्ठः, पर्वभेदेन भेदमारोप्य बहुवचनम् । **उष्णिहाभ्यः** उष्णिहाः तत्रत्या नाड्यः, यानि तद्गतान्यस्थीनि ताः **कीकसाः** । अनूक्यात् पृष्ठवंशात् दोष्णोर्भवं **दोषण्यं**, अंसौ बाहू च प्रसिद्धौ ॥

[3]**आन्त्रेभ्य इति** ॥ अशितं पक्वावस्थायां येषु तिष्ठति तानि **आन्त्राणि** तेभ्यः गुदाभ्यः गुदनाडीभ्यः **वनिष्ठोः** आन्त्रेष्वेव स्थूलप्रदेशात् हृदयात् हृदयपुण्डरीकात् **मतस्नाभ्यां** आम्रफलाकृतिभ्यां वृक्याभ्यां **यक्नः** यकृतः **प्लाशिभ्यः** पर्शुभ्यः* ॥

---

*पार्श्वेभ्यः, वस्तिभ्यः.

विवृ॑हामि ते । [4]ऊ॒रुभ्यां॑ तेऽष्ठीव॒द्भ्यां॒ जङ्घा॑भ्यां॒ प्रप॑दाभ्याम् । यक्ष्म॒ꣳ श्रोणी॑भ्यां भा॒सदा॒द्भ्रꣳसो॒ विवृ॑हामि ते । [5]मेह॑नाद्वल॒ङ्क॒र॑णा॒ल्लोम॑भ्यस्ते॒ न॒खे॑भ्यः । यक्ष्म॒ꣳ सर्व॑स्मादा॒त्मन॒स्तमि॒मं विवृ॑हामि ते । [6]अङ्गा॑दङ्गा॒ल्लोम्नो॑लोम्नो जा॒तं पर्व॑णिपर्वणि । यक्ष्म॒ꣳ सर्व॑स्मादा॒त्मन॒स्तमि॒मं विवृ॑हामि ते ।

---

[4]ऊरुभ्यामिति ॥ ऊरू प्रसिद्धौ । **अष्ठीवद्भ्यां** ऊरुजान्वोः सन्धिप्रदेशाभ्याम्, जङ्घे प्रसिद्धे । **प्रपदाभ्यां** पादाग्राभ्यां **श्रोणीभ्यां** ऊरुमूलाभ्यां **भासदात्** भसदिति, गुह्यप्रदेशे अवयवविशेषस्य नाम भसदेव भासदं तस्मात् **ध्वंससः** नाभेः गुदवलयादित्यन्ये ॥

[5]मेहनादिति ॥ मेहनं प्रजननम् । **वलङ्करणात्**, नकारस्य लकारः छान्दसः । नकारमेव बह्वृचाः पठन्ति । वनं वननं तत्क्रियते येन तद्वनंकरणं सर्वो हि लोकः तेन वशीकृतः । एवम्भूतात् **मेहनात्** । अन्ये तु उ अलङ्करणात् इति छेदमाहुः, **अलङ्करणात्** मेखलाप्रदेशात्, **लोम नखं** च प्रसिद्धम् । **सर्वस्मात् आत्मनः** उक्तादनुक्ताच्च प्रदेशात् **तमिमं** यक्ष्मं **विवृहामि** ॥

[6]अङ्गादङ्गादिति ॥ सर्वस्मादङ्गात् **लोम्नोलोम्नः** सर्वेभ्यो लोमभ्यश्च **पर्वणिपर्वणि** प्रतिपर्वसन्धि **जातं यक्ष्मं सर्वस्मा**दिति गतम् ॥

[7]परा देहि शाबल्यं ब्रह्मभ्यो विभजा वसु । कृत्यैषा पद्वती भूत्वा जायाऽऽविशते पतिम् । [8]अश्लीला तनूर्भवति रुशती पापयाऽमुया । पतिर्यद्वध्वै वाससा स्वमङ्गमभि धित्संति । [9]क्रूरमेतत्कटुकमे-

---

[7]यत् 'परि त्वा गिर्वणः'* इति परिधापितं वधूवासस्तदेतद्विदे विवाहकर्मविदे दद्यादुत्तराभिः—**परादेहीति** ॥ परित्यज **शाबल्यं** शबलवर्णं वासः, **ब्रह्मभ्यो** ब्राह्मणेभ्यः **वसु विभज** विभज्य देहि । किं पुनः कारणं वाससस्त्यागे इति चेदुच्यते—**एषा जाया पद्वती** पादवती **कृत्या भूत्वा पतिं आविशते** ॥

[8]**अश्लीलेति** ॥ **अमुया पापया** च कृत्यया आविष्टवत्या पत्युः **तनूः अश्लीला** निश्रीका **भवति रुशती** च । **रुशतिः** हिंसार्थः, व्यत्ययेन च कर्मणि कर्तृप्रत्ययः । हिंस्यमाना च भवति । कस्मिन् पुनः कृते सर्वमेतद्भवति ? उच्यते—**पतिः यत्** यदि **वध्वै** वध्वाः **वाससा स्वं** आत्मीयं **अङ्गं** शरीरं **अभिधित्सति** परिधातुमिच्छति वधूवाससः परिधानमेवंनाम दुष्टं, तस्मात् तन्न परिधेयं मन्त्रविदाऽपि सता ॥

[9]पुनरपि वास एव निन्द्यते—**क्रूरमिति** ॥ **क्रूरं** विनाशकारि **कटुकं** रुजाकारि **अपाष्ठवत्** अपष्ठु **विषवत्** विषयुक्तं च, एवंनाम निन्दितं **एतत्** वासः **अत्तवे न** भवति उपभोक्तुं योग्यं न भवति । कस्य तर्हीदं योग्यमित्याह—**सूर्यां** सूर्या

---

*१-२-६.

तदपाष्ठवद्विषवन्नैतदत्तवे । सूर्यां यः प्रत्यक्षं विद्या-त्स एतत्प्रतिगृह्णीयात् । [10]आशसनं विशसनमथो अधि विचर्तनम् । सूर्यायाः पश्य रूपाणि तानि ब्रह्मोत शꣳसति ॥ १८ ॥

इमं विवृहामि ते शꣳसति ॥ १८ ॥

अक्षीभ्यां ग्रीवाभ्य आन्त्रेभ्य ऊरुभ्यां मेहना-दङ्गादङ्गात्परादेहि सप्त ॥

प्रसुग्मन्ताऽष्टादश हिरण्यवर्णाः पञ्चदश सो-मः प्रथमष्षोडश सोमाय जनिविदेऽष्टादशातिष्ठेमं

---

नाम विवाहदेवता तया दृष्टोपि मन्त्रगणः सूर्या 'प्रसुग्मन्ता' * इत्यादिरेवमन्तः । तां यः प्रत्यक्षं स्पष्टं पदशः स्वरशः अक्षरशः अर्थतो विनियोगतश्च विद्यात् जानीयात् स एतत्प्रतिगृह्णीयात् प्र-तिग्रहीतुमर्हति ॥

[10]पुनरपि वाससो निन्दा—आशसनमिति ॥ आशसनं क्षत-करणं शूलादि विशसनं चर्मणां पृथक्करणं स्वधित्यादि अथो अपिच अधिरनर्थकः । विचर्तनं त्वचोऽन्यत्र मोचनं एवम्भूतमे-तद्वासः न प्रतिगृह्णीयादिति संबन्धः । अथ तस्य कथमनर्थो न भवति ? उच्यते—सूर्यायाः पश्य रूपाणि सूर्याया हि ता-

---

*१-१-१.

त्रयोविंशतिस्सत्येन ता मन्दसानैकान्न विंशतिरेकान्न विंशतिश्शर्म वर्मैकविंशतिरिह गाव एकान्न विंशतिरुदीर्ष्वातो दशापश्यं त्वा द्वादशारोहोरुं नव विष्णुर्योनिं करोमि तेऽष्टादशाष्टादश प्रातरग्नि चतुर्दशेमां खनाम्युदसौ सूर्यो द्वादशद्वादशाक्षीभ्यां ते विंशतिरष्टादश ॥ १८ ॥

प्रसुग्मन्ताऽपश्यं त्वाऽष्टादश ॥ १८ ॥

प्रसुग्मन्ता तानि ब्रह्मोत शंसति ॥ हरिः ओम्.

इत्येकाग्निकाण्डे प्रथमप्रश्नः.

---

दशानि रूपाणि, तानि च ब्रह्म ब्राह्मणः शंसति तस्य कथमनर्थशङ्केति । उतशब्दः सम्यगर्थे, अनेकार्थत्वान्निपातानाम् । एवमेतद्वधूवाससः परिदानं* चतुर्थ्यन्ते कर्तव्यं, तथा च विवाहान्ते आश्वलायनः 'सूर्याविदे वधूवस्त्रं दद्यात्'[1] इति । अन्ये तु—यक्ष्मगृहीतायाः वासः एतद्भैषज्यविदे देयमुपदिश्यते इत्याहुः । सूर्याशब्देनापि त एव मन्त्रा उच्यन्ते ॥

इति श्रीहरदत्तमिश्रविरचिते एकाग्निकाण्डमन्त्रव्याख्याने अष्टादशः खण्डः.

प्रथमः प्रपाठकस्समाप्तः.

---

*परिधानं.

[1] गृ. १-८-३.

द्वितीयप्रश्नप्रारम्भः.

[1]उष्णेन वायवुदकेनेह्यदितिः केशान्वपतु ।[2]आपं उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । ज्योक्च सूर्यं दृशे ।[3]येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायु-

---

[1]अथोपनयनमन्त्राः । तत्र उष्णा अपः शीतास्वानयति— **उष्णेनेति** ॥ हे **वायो! उष्णेन उदकेन** उष्णमुदकं गृहीत्वा **एहि** आगच्छ । किमर्थं? **अदितिः केशान्वपतु** अदित्याः वपने अनुग्रहकर्तृत्वं, एवं वायोरुदकानयने ॥

[2]उत्तरया शिर उनत्ति—**आप उन्दन्त्विति** ॥ माणवकस्यास्य शिरः **आपः उन्दन्तु** क्लेदयन्तु **जीवसे** जीवितुं जीवनाय । कियन्तं कालं? **दीर्घायुत्वाय** षोडशवर्षयुतं शतं दीर्घमायुः, **वर्चसे** दीप्तये **ज्योक्** दीर्घकालं **सूर्यं दृशे** द्रष्टुं यथा अयं दीर्घकालं जीवेत्, तावन्तं कालं चक्षुष्मान्भवति वर्चस्वी च तथोन्दन्तु ॥

[3]उत्तराभिः प्रतिदिशं प्रवपत्याचार्यः । तत्र प्राच्यां दिशि— **येनावपदिति** ॥ **येन क्षुरेण सविता सोमस्य राज्ञः वरुणस्य** शिर **अवपत् विद्वान्** नापितकर्मणि कुशलः । **तेन** क्षुरेण जातिद्वारेणैक्यं तादृशेन वा क्षुरेण हे **ब्रह्माणः**! ब्राह्मणाः पुण्याहवाचनस्य कर्तारः **इदं अस्य** माणवकस्य शिरः

ष्मा॒ञ्जर॑दष्टि॒र्यथाऽसंद॒यम॒सौ । [4]येन॑ पू॒षा बृह॒स्पते॑र॒ग्नेरिन्द्र॑स्य॒ चायु॑षेऽवंपत् । तेना॒स्यायु॑षे वप॒ सौश्लो॑क्याय स्व॒स्तये॑ । [5]येन॒ भू॒य॒श्चरा॑त्य॒यं ज्योक्च॒ प॒श्यति॒ सूर्यं॑म् । तेना॒स्यायु॑षे वप॒ सौश्लो॑क्याय स्व॒स्तये॑ । [6]येन॑ पू॒षा बृह॒स्पते॑र॒ग्नेरिन्द्र॑स्य॒ चायु॑षेऽवं-

---

**वपत** वपने मां प्रयुङ्ध्वमित्यर्थः । युष्मदनुज्ञयाऽहं प्रवपामीति यावत् । **यथा** वपने सति **अयं** माणवकः **असौ** यज्ञशर्मा **आयुष्मान् जरदष्टिः** जीर्णाशनश्च[1] **असत्** स्यात् तथा वपत । असावित्यत्र, माणवकस्य नामनिर्देशः प्रथमया ॥

[4]अथ दक्षिणतः—**येन पूषेति** ॥ **येन** क्षुरेणेति गतम् । **तेन** क्षुरेण **अस्य** शिरः **आयुषे वप** शरीरात्मानं प्रत्यन्तरात्मनः प्रैषः, हे मदीयशरीरात्मन्! वप **सौश्लोक्याय** सुश्लोकमकीर्तिः तस्य भावः सौश्लोक्यं यथा अयं सुकीर्तिः स्यात् तथेत्यर्थः । **स्वस्तये** अविनाशाय च ॥

[5]अथ पश्चात्—**येन भूय इति** ॥ **येन** क्षुरेण उप्तः **अयं** माणवकः **भूयश्चराति** । पञ्चमो लकारः । भूयिष्ठं चरेत् सर्वानतीत्य चरेत्, **ज्योक्** दीर्घकालं **च सूर्यं पश्याति** पश्येत् । छान्दस उभयत्र दीर्घः । तेनेत्यादि गतम् ॥

---

[1]जरावस्थां गतः, पा.

पत् । तेन॑ ते वपाम्यसावायु॑षा वर्च॑सा यथा ज्यो-
कसुमना असाः । [7]यत्क्षु॒रेण॑ म॒र्चय॑ता सु॒पेश॑सा
वप्त्रा वप॑सि केशान्॑ । शु॒न्धि शिरो॒ मा ऽस्यायुः॒ प्रमो॑-
षीः । [8]उ॒प्त्वाय॒ केशा॒न्वरु॑णस्य॒ राज्ञो॒ बृह॒स्पति॑स्सवि॒-

[6]अथोत्तरतः—येन पूषेति ॥ पूर्वार्धं गतम् । तेन क्षुरेण ते तव शिरो वपामि असौ इति नामनिर्देशः संबुद्ध्या यज्ञशर्मन्! यथा वपने सति आयुषा वर्चसा च युक्तः ज्योक् दीर्घकालं सुमनाः त्वं असाः । अत्रापि पञ्चमो लकारः । स्याः तथा वपामि ॥

[7]अथ वपन्तं नापितं उत्तरयाऽनुमन्त्रयते आचार्यः—यत्क्षुरेणेति ॥ यत् यदा क्षुरेण मर्चयता तीक्ष्णभूतेन सुपेशसा सुरूपेण उज्ज्वलेन वप्त्रा करणस्य कर्तृत्वविवक्षा, एवम्भूतेन क्षुरेण यदाऽस्य केशान्वपसि । यदिति वचनात्तदेत्यध्याहार्यम् । तदा अस्य शिरः शुन्धि शुद्धं कुरु यथा केशाः निर्मूला[1] भवन्ति तथेत्यर्थः । आयुस्तु अस्य मा प्रमोषीः वपनस्य स्वतो मङ्गलत्वात् एवं प्रार्थ्यते । तथा च ब्राह्मणम् । 'रिक्तो वा एषोऽनपिहितो यन्मुण्डः'[2] इति ॥

[8]अथ केशनिधानमन्त्रः—उप्त्वाय केशानिति ॥ उप्त्वाय उप्त्वा 'क्त्वो यक्' । केशान् , कस्य? वरुणस्य राज्ञः, के?

[1]निश्शेषाः. [2]आप. ध. १-१०-८.

ता सोमो अग्निः । तेभ्यो निधानं बहुधाऽन्वविन्द-
न्नन्तरा द्यावापृथिवी अपस्सुवः ॥ १ ॥

आयुषेऽवपत्पश्च च ॥ १ ॥

[1]आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृ-
ष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं

---

बृहस्पत्यादयः । ते किमकुर्वन् ? तेभ्यः तेषां केशानां निधानम् । अधिकरणे ल्युट् । ते यत्र निधीयन्ते तत्स्थानं बहुधा बहुभिः प्रकारैः अन्वविन्दन् अनुक्रमेण लब्धवन्तः । क्व? अन्तरा-द्यावापृथिवी द्यावापृथिव्योर्मध्ये अपः अन्तरिक्षे सुवः स्वर्गे लोके, कालभेदेन स्थानभेदः । एवं अहमपि उदुम्बरमूले दर्भ-स्तम्बे वा निदधामीति योज्यम् ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने
द्वितीयप्रश्ने प्रथमः खण्डः.

---

[1]अथ समिदाधानम्—आयुर्दा देवेति ॥ हे देव! अग्ने! आ-युर्दाः त्वं जरसं जरा स्तुतिः तां गृणानः उच्चारणकर्माऽयम-न्यत्र, इह तु ग्रहणे द्रष्टव्यः, स्तुतिं गृह्णन् इत्यर्थः । घृतप्र-तीकः घृ क्षरणदीप्त्योः, प्रतीकमिति अवयवनाम, दीप्तावयवः घृतं आज्यं पृष्ठे यस्य सः घृतपृष्ठः घृतं पिबन् । कीदृशं ? अमृतं चारु गव्यं अस्मिन्कर्मणि आज्यभागादिरूपेण । एवं-भूतस्त्वं इदानीं अनया समिदाहुत्या इमं माणवकं जरसे नय

जरसे नयेमम् । [2]आतिष्ठेममश्मानमश्मेव त्वꣳ स्थिरो भव । अभितिष्ठ पृतन्यतस्सहस्व पृतनायतः । [3]रेवतीस्त्वा व्यक्ष्णन्कृत्तिकाश्चाकृन्तꣳस्त्वा । धियोऽवयन्नव ग्रा अवृञ्जन्थ्सहस्रमन्ताꣳ अभितो अयच्छन् । [4]देवीर्देवाय परिधी सवित्रे महत्तदासाम-

जरां प्रापय यथाऽयं दीर्घायुर्भवति तथा कुरु पितेव पुत्रं यथा पिता पुत्रं सर्वप्रकारेण दीर्घमायुः प्रापयति तद्वत् । एवं तावदाचार्यो मन्त्रस्य वक्तेति पक्षे योजना । माणवकपक्षे तु इमं मां नयेति ॥

[2]अश्मास्थापनम्—आतिष्ठेति ॥ गतम्* ॥

[3–4]उत्तराभ्यां वासोऽभिमन्त्रणम्—रेवतीरिति ॥ हे वासः! त्वा त्वां रेवतीः 'वा छन्दसि' इति जसि पूर्वसवर्णः, रेवत्यो नाम देवताः व्यक्ष्णन् विविधमध्वंसयन् कार्पासावस्थायां बीजनिर्हरणार्थम् । कार्यकारणयोरभेदोपचारात् वास एव ताः व्यक्ष्णन् । कृत्तिकाश्च त्वा त्वां अकृन्तन् कर्तनं तन्तुकरणम् । अत्राप्यभेदोपचारः । धियो नाम देवताः त्वा अवयन् तन्तुसन्तानं कृत्वा वासः कृतवत्यः । ग्नाश्च देवतास्त्वामवावृञ्जन्† अन्तरयोरच्छिन्दन् । किञ्च—उक्ता अन्याश्च सहस्रं देव्यः अन्तान् दशासूत्राणि अभितः उभयोः पार्श्वयोः अयच्छन्

*१-५-१. †अवग्नाश्च देवतास्त्वामवृञ्जन्.

भवन्महित्वनम् । [5]या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्तानभितोऽददन्त । तास्त्वा देवीर्जरसे संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः । [6]परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः । बृहस्प-

---

दाण् दाने, तस्य यच्छादेशः, दत्तवत्यः । **देवीः** देव्यः स-हस्रामित्यनेन पूर्वेण सम्बन्धः । **देवाय सवित्रे** देवस्य स-वितुः **परिधी** परिधिः परिधानं, सप्तम्येकवचनस्य पूर्वसवर्णः, परिधौ परिधानकाले **आसां** देवीनां **तत्** महित्वनं महत्त्वं **म-हदभवत्** एवं नाम ता देव्यो महत्यो यद्देवस्य सवितुः वासः कृतवत्यः । एवम्भूतं च त्वमसीत्यभिमन्त्रणार्थः ॥

[5]उत्तराभिः तिसृभिः परिधापयति—**या अकृन्तन्निति** ॥ **या** देव्यः त्वां **अकृन्तन्** **याश्चावयन्** **याश्चातन्वत** विस्तारित-वत्यः **याश्च** **अन्तान्** दशासूत्राणि **अभितः** उभयोः पार्श्वयोः **अददन्त** दत्तवत्यः दद दाने, **तास्त्वा** रेवत्यादयो **देवीः** देव्यः **जरसे** यथा त्वं जरां प्राप्नुयाः तथा **संव्ययन्तु** परिधापयन्तु, त्वं च **आयुष्मान्** भवन् **इदं** **वासः** **परिधत्स्व** परिधेहि ॥

[6]**परिधत्तेति** ॥ हे देव्यो! रेवत्यादयः! **एनं** कुमारं **वास-सा परिधत्त** आच्छादयत **धत्त** अत्रापि परिरपेक्ष्यते, आदरार्थं पुनर्वचनम् । परिदधत्यश्च **शतायुषमेनं** **कृणुत** । **दीर्घमायुरि-ति** । अस्योत्तरेण सम्बन्धः, कारणे च कार्योपचारः, दीर्घस्या-

**तिः प्रायच्छद्वास एतथ्सोमाय राज्ञे परिधातवा उ।**
**[7]जरां गच्छासि परिधथ्स्व वासो भवा कृष्टीनाम-**
**भिशस्तिपावा । शतं च जीव शरदस्सुवर्चा राय-**
**श्च पोषमुप संव्ययस्व । [8]परीदं वासो अधिधा-**
**स्स्वस्तयेऽभूरापीनामभिशस्तिपावा। शतं च जीव**

---

युषो निमित्तभूतं **एतद्वासो बृहस्पतिः प्रायच्छत्** । कस्मै ? **सोमाय राज्ञे** । किमर्थं ? **परिधातवै** परिधानार्थम् । उ इत्य-नर्थकः ॥

[7]**जरां गच्छासीति** ॥ इदं वासः **परिधत्स्व**, परिधाय च **जरां गच्छासि** गच्छेः । **कृष्टीनां**[1] बन्धुमनुष्याणां च **अभिशस्तिपावा** अभिशस्तेः पाता रक्षिता **भव** । जरां गच्छसीत्युक्तमेव विशिष्यते—**शतं च जीव शरदः** संवत्सरान् **सु-वर्चा** भूत्वा **रायश्च पोषं** रायो धनस्य च पोषं **उप** उपेत्य-यमभेरर्थे, अभि**संव्ययस्व** वासो यथा रायस्पोषं भवति तथेत्यर्थः ॥

[8]परिहितवन्तं कुमारमुत्तरयाऽनुमन्त्रयते—**परीदं वास** इति ॥ त्वं **इदं वासः पर्यधिधाः** परिहितवानसि । धाञो लुङि रूपमेतत्, थकारस्य धकारश्छान्दसः । किमर्थं ? **स्वस्तये** । परिधाय च **आपीनां** आप्तानां ज्ञात्यादीनां **अभिशस्तिपावा** अभिशस्तेः पाता **अभूः**। **शतं च जीव शरदः** गतम् ।—**पुरूचीः** बहुगतिः **वसूनि** च

---

[1]आकृष्टीनां.

**शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन् । [6]इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात् । प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानाꣳ सुभगा मेखलेयम् । [10]ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षस्सहमाना अरातीः । सा**

---

आर्यः स्वामी भूत्वा **विभजासि** विभजेः विभज्य दद्याः **जीवन्** सम्पन्नस्सन्, लोके हि स जीवतीत्युच्यते यस्सम्पन्नो भवति॥

[9]मौञ्ज्याः परिव्ययनमन्त्रौ—**इयं दुरुक्तादिति** ॥ इयं मेखला **दुरुक्तात्** । [*]शस आदादेशः । दुरुक्तानि तथैव शाबरगृह्यपाठः । **परिबाधमाना** सर्वतो नाशयन्ती **शर्म** शरणं गृहं **वरूथं** वरणीयं **पुनती** शोधयन्ती नः अस्माकं सम्बन्धि अस्मान्वा **आगात्** आगतवती, **प्राणापानाभ्यां**, चतुर्थ्यन्तमेतत, ताभ्यां **बलमाभरन्ती** आहरन्ती **प्रिया देवानां** एवम्भूता **इयं मेखला**, अतश्च इयमेव **सुभगा** ॥

[10]**ऋतस्येति** ॥ **ऋतस्य** सत्यस्य यज्ञस्य वा **गोप्त्री तपसः परस्पी**, पातेरेतद्रूपं, परशब्दः प्रकर्षे, तपसः प्रकर्षेण पात्री रक्षित्री **घ्नती रक्षः** रक्षसां हननं कुर्वन्ती **सहमाना** अभिभवन्ती **अरातीः** शत्रुजातीः, छान्दसः प्रकृतिभावः । या एवंभूता **सा** त्वं नः अस्मान् **समन्तं** परितः **अनु** आनुपूर्व्येण **परीहि** परिगच्छ, **भद्रया** त्वया रक्षिता वयं हे **मेखले!** **मा**

**नंस्समन्तमनु परीहि भद्रया भर्तारस्ते मेखले मा रिषाम । [11]मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳ समिद्धम् । अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥ २ ॥**

**दीर्घमायुस्समिद्धमेकं च ॥ २ ॥**

---

**रिषाम रिष्टा** मा भूम भर्तारः ते त्वां बिभ्राणाः, 'कर्तृकर्मणोः कृति'॥

[11]अजिनमन्त्रः—**मित्रस्येति** ॥ **मित्रस्य** आदित्यस्य **चक्षुः** प्रकाशकं, अजिनोत्तरीयो हि दीर्घायुर्भवति, स च आदित्यं पश्यति अतः तस्य प्रकाशकं **धरुणं** धार्यमाणं **बलीयः तेजः** अत्यन्तं बलिष्ठं तेजः **यशस्वि** धारयतो यशोनिमित्तत्वात् स्वयमेव यशस्वि **स्थविरं** प्रवृद्धं **समिद्धं** सम्यगिद्धं दीप्तिमत् **अनाहनस्यं** आहनसः धूर्ताः 'ये ते मदा आहनसः'* इत्यादौ दर्शनात् । तेषां कर्म आहनस्यं मणितशब्दादि । 'आहनस्याद्वै रेतस्सिच्यते'† इति बह्वृचब्राह्मणम् । तद्विपरीतं अनाहनस्यं धूर्तानामयोग्यमित्यर्थः । **वसनं** उपरिवासः **जरिष्णु**, जीर्यतिस्स्तुत्यर्थः कर्मणि च कर्तृप्रत्ययः, स्तोतव्यं जरायाः प्रापयितृ वा **वाजि** अन्नवत् अन्नस्य दातृ वा **इदं** एवम्भूतं **अजिनं अहं परिदधे** प्रावृणोमि ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने

द्वितीयप्रश्ने द्वितीयः खण्डः.

---

*ऋक्सं. ९-७९-५. †६-५-२०.

[1]आगन्त्रा समगन्महि प्रसु मृत्युं युयोतन । अरिष्टास्संचरेमहि स्वस्ति चरतादिह स्वस्त्या गृहेभ्यः । [2]समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमश्याम् । इमे नु ते रश्मयस्सूर्यस्य येभि-

---

[1]उत्तरेणाग्निं दर्भेषु अवस्थापनमन्त्रः—**आगन्त्रेति** ॥ **आगन्त्रा** आगच्छता आचार्येण **समगन्महि** सङ्गतास्स्मः । सङ्गताश्च **मृत्युं** मरणं **प्रसुयुयोतन** यौतिः पृथग्भावे लोण्मध्यमपुरुषबहुवचनस्य तनबादेशः, व्यत्ययेन च उत्तमपुरुषस्य स्थाने मध्यमः । प्रकर्षेण सुष्ठु च पृथत्करवाम । **अरिष्टाश्च संचरेमहि** । आचार्योऽपि **स्वस्ति चरतात्** ममापि इह ब्रह्मचर्ये **स्वस्ति** भवतु **आ गृहेभ्यः** आ गृहस्थाश्रमप्राप्तेः ॥

[2]प्रोक्षणमन्त्रः—**समुद्रादूर्मिरिति** ॥ यत्प्रोक्षणबिन्दवः मयि पतन्ति तत् **समुद्रादेव मधुमान् ऊर्मिः** मां **उदारत्** उन्मुखं आगमत् । उपेत्यस्य अश्यामित्याख्यातेन सम्बन्धः । अनुदात्तपाठस्तु व्यत्ययेन । बह्वृचास्तु आद्युदात्तमेव अधीयते । **अंशुना** अन्तर्हीतमत्वर्थमेतत्, अंशुमता दीप्तिमता तेनोर्मिणा **अमृतत्वं समुपाश्यां** सम्यगुपाश्नुवीय । **इमे नु ते** नु इत्यनर्थकः, यद्यप्यूर्मिरित्येकवचनान्तं प्रकृतं, तथाऽपि रश्मय इत्यनेन सामानाधिकरण्यात् इमे ते इति बहुवचनम् । इमे ते **सूर्यस्य रश्मयः** योऽयं ऊर्मिर्मामुदारत् कार्यकारणयोरभेदोपचारः, 'आदित्याज्जायते वृष्टिः' *

---

*मनु. ३-७६.

स्सपित्वं पितरो न आयन्न् । [3]अग्निष्टे हस्तंमग्रभी-[4]त्सोमस्ते हस्तंमग्रभी[5]त्सविता ते हस्तंमग्रभी-[6]त्सरंस्वती ते हस्तंमग्रभी[7]त्पूषा ते हस्तंमग्रभी-[8]दर्यमा ते हस्तंमग्रभी[9]दंशुस्ते हस्तंमग्रभी[10]द्भग-स्ते हस्तंमग्रभी[11]न्मित्रस्ते हस्तंमग्रभी[12]न्मित्रस्त्व-

---

इति । अपां बिन्दवः सूर्यस्य रश्मयः येभिः ये रश्मिभिः सपि-त्वं समानपानं नः अस्मकं पितरः अङ्गिरसः आयन् इतव-न्तः । आङ्गिरसस्य वामदेवस्य वैतद्वचनम् । अङ्गिरसो देवानां सखा-यः, अतो रश्मिभिरन्यैश्च देवैस्सह पानमुपपन्नम् । एतदुक्तं भव-ति—यैः रश्मिभिस्सहास्मत्पितरो अङ्गिरसः सोमपानं कृतवन्तः तत्कारणका बिन्दवो मयि पतिताः तैश्चामृतत्वमुपाश्नुवीयेति ॥

[3—12]हस्तग्रहणमन्त्राः—अग्निष्ट इति ॥ यदिदं मया तव ह-स्तग्रहणं तदग्न्यादिभिरेव ग्रहणमस्त्वित्युपचारः । लोडर्थे लुङ् । अग्रभीत् अग्रहीत् गृह्णातु । अग्निः सोमः सरस्वती च प्र-सिद्धाः । सवित्रादयोपि द्वादशादित्यानामन्यतमे* । त्वं धर्मणा धर्मेण मित्रोसि यादृशो मित्रो देवः तादृशोसि । कीदृशश्च सः? 'मित्रं देवा अब्रुवन्त्सोमं राजानं हनामेति सोऽब्रवीन्नाहं सर्वस्य वा अहं मित्रमस्मि' † इति । एवंविधः अग्निः तवाचार्यस्थानीयः ॥

---

*अन्यतमशब्दस्य सर्वनामत्वं नास्तीति भट्टोजीदीक्षिताः. †सं. ६-४-८.

मसि धर्मणाऽग्निराचार्यस्तव । [13]अग्नये त्वा परि ददाम्यसौ [14]सोमाय त्वा परि ददाम्यसौ [15]सवित्रे त्वा परि ददाम्यसौ [16]सरस्वत्यै त्वा परि ददाम्यसौ [17]मृत्यवे त्वा परि ददाम्यसौ [18]यमाय त्वा परि ददाम्यसौ [19]गदाय त्वा परि ददाम्यसा[20]वन्तकाय त्वा परि ददाम्यसा[21]वद्भ्यस्त्वा परि ददाम्यसा-[22]वोषधीभ्यस्त्वा परि ददाम्यसौ [23]पृथिव्यै त्वा सवैश्वानराये परि ददाम्यसौ । [24]देवस्य त्वा सवितुः प्रसव उपनयेऽसौ । [25]सुप्रजाः प्रजया भूयास्सु-

---

[13-23]उत्तरे परिदानमन्त्राः—अग्नये त्वेत्यादयः ॥ रक्षार्थं दानं परिदानम् । सर्वत्र च असौशब्दस्य स्थाने माणवकस्य नाम निर्देशः संबुद्धया ॥

[24]अथोपनयनमन्त्रः—देवस्य त्वेति ॥ देवस्य सवितुः प्रसवे अनुज्ञायां सत्यां त्वां अहं उपनये आत्मनः समीपं प्रापयामि वशं नयामीत्यर्थः । नामनिर्देशः पूर्ववत् । केचित्तु—अन्तोदात्तस्य पाठात् आचार्यस्य नाम्नः प्रथमया निर्देशं मन्यन्ते ॥

[25]अथ कर्णे जपः—सुप्रजा इति ॥ हे ब्रह्मचारिन् ! त्वं प्रजया सुप्रजा भूयाः । सुवीरो वीरैः । अत्र वीराः पौत्राः, प्रजाया उक्तत्वात् । वर्चसा सुवर्चाः, पोषैश्च सुपोषः, भूया इति सर्वत्रानुषङ्गः ॥

**वीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैः । [26]ब्रह्म-चर्यमागामुप मा नयस्व देवेन सवित्रा प्रसूतः। [27]कोनामास्यसौ नामास्मि कस्य ब्रह्मचार्यस्यसौ प्राणस्य ब्रह्मचार्यस्म्यसा[28]वेष ते देव सूर्य ब्रह्मचारी तं गोपाय स मा मृतैष ते सूर्य पुत्रस्सु*दीर्घायुस्स मा मृत। या१९ स्वस्तिमग्निर्वायुस्सूर्यश्चन्द्रमा आ-**

---

[26]अथ कुमारस्य मन्त्रः—**ब्रह्मचर्यमिति** ॥ ब्रह्म वेदः तद-र्थं व्रतं **ब्रह्मचर्यं** तदहं **आगाम्** । 'आशंसायां भूतवच्च' इति भविष्यति लुङ् । प्राप्नुवानि, तं **मां उपनयस्व देवेन सवित्रा प्रसूतः** अनुज्ञातस्त्वम् ॥

[27]**कोनामासीति** ॥ **कोनामासि** किंनामधेयोसीत्याचार्यः । **असौ नामास्मि** इति माणवकः । नामनिर्देशः प्रथमया । **कस्य ब्रह्मचार्यस्यसौ** इत्याचार्यः । नामनिर्देशस्संबुद्ध्या । **प्राणस्य ब्राह्मचार्यस्म्यसौ** इति माणवकः । नामनिर्देशः प्रथ-मया । प्राण आत्मा † ॥

[28]**एष** इत्याचार्यः । एष माणवकः हे **देव! सूर्य!** ते तव **ब्रह्मचारी तं गोपाय** रक्षस्व । **स** च **मा मृत** मरणं मा गमत्, हे **सूर्य!** ते तव **एष पुत्रश्च सुदीर्घायुः** भवतु स च **मा मृत** दीर्घायुषो मध्ये मरणं मा गमत् **यां स्वस्ति** अग्न्यादयः अनु

---

*पुत्रस्स †प्राणस्य आत्मनः.

पोऽनु सं चरन्ति ताꣳ स्वस्तिमनु सं चरासा[29] वध्वं-
नामध्वपते श्रेष्ठस्याध्वनः पारमशीय ॥ ३ ॥

आगन्ता दर्श ॥ ३ ॥

[1]योगेयोगे तवस्तरं[2]मिममग्न आयुषे वर्चसे कृ-

---

क्रमेण सञ्चरन्ति तां स्वस्तिं त्वमपि अनुसञ्चर असौ यज्ञ-
शर्मन् ! ॥

[29]अध्वनामिति माणवकः* ॥ अध्वपत इत्युक्ते एकस्या-
ध्वनः पतिरित्यपि गम्यते अतः अध्वनामिति पुनर्वचनं, सर्वेषा-
मध्वनां अध्वपते ! सूर्य ! अहं त्वत्प्रसादात् श्रेष्ठस्य श्रेयस्करस्य अ-
ध्वनः ब्रह्मचर्यमार्गस्य पारं पर्यन्तं अशीय अश्नुवीय । ध्वं दुःखं तत्
यत्र नास्ति सोऽध्वा तस्य सुखसाधनस्य मार्गस्य पते! इत्यर्थः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने तृतीयः खण्डः.

---

[1]अथ होममन्त्राः—ते च सर्वे माणवकस्यैव । द्वितीयचतुर्था-
वाचार्यस्येत्येके । योगेयोगे गतम् । योगस्त्विह कर्मण्युद्योगः† ॥

[2]इममग्न इति ॥ हे अग्ने! त्वं इमं माणवकं आयुषे वर्चसे

---

*प्रत्यगाशिषं माणवकं वाचयति अध्वनामिति पा. †ब्रह्मचर्यकर्मण्युद्योगः पा.

[1]मन्त्रोऽयं (१०) पत्रे लिखितः.

[2]इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण

धीति द्वे । [3]शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भव-

---

कृधि कुरु यथाऽयं आयुष्मान् वर्चस्वी च भवति तथा कुरु । हे वरुण! त्वं पुनरस्य प्रियं रेतः कुरु प्रियं पुत्रं देहि यथा गृहस्थो भवति । हे सोम राजन्! त्वं च, हे अदिते! त्वं च अस्मै मातेव शर्म सुखं यच्छ देहि । दाण् दाने, यच्छादेशः । हे विश्वेदेवाः! यूयं च शर्म यच्छत, यथा सत्ययं जरदष्टिः असत् स्यात् । आचार्यपक्षे सुगमम् । माणवकपक्षे आत्मन एव परोक्षनिर्देशः । इमं जनं अस्मै जनाय अयं जनो जरदष्टिरसदिति ॥

[3]शतमिन्नु शरद इति ॥ इच्छब्द एवार्थे । नुशब्दः प्रसिद्धौ । शतमेव हि शरदः परमायुः । कीदृशं शतं? अन्ति अन्तिकं सन्निकृष्टं अल्पमित्यर्थः । हे देवाः! यत्र शते नः अस्माकं तनूनां अवयवापेक्षं बहुवचनम्, शरीरस्य तदवयवानां च जरसं चक्रा कृतवन्तः स्थ । छान्दसो दीर्घः । यत्र च कियन्तंचिरकालं पुत्रा भूत्वा पितरो भवन्ति पालका भवन्ति कुटुम्बभरणव्याकुला* भवन्ति एवं नाम विरसमायुः यत्स्वरूपेणाल्पं जरया चाभिभूतं कुटुम्बभरणादिना च व्यथाकारि एवम्भूत-

---

सोम राजन् । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत् ॥ (सं. २-३-१०.)

* भरणस्यानुकूला.

न्ति मा नो मध्या रीरिषतायुर्गन्तोः । [4]अग्निष्ट आयुः प्रतरं दधात्वग्निष्टे पुष्टिं प्रतरं कृणोतु । इन्द्रो मरुद्भिर् ऋतुधा कृणोत्वादित्यैस्ते वसुभिरा दधातु । [5]मेधां मह्यमङ्गिरसो मेधाᳲ सप्तर्षयो ददुः । मेधां मह्यं प्रजापतिर्मेधामग्निर्ददातु मे । [6]अप्सरासु च या मेधा गन्धर्वेषु च यद्यशः । दैवी

---

मपि तावत् **नः** अस्माकमायुः पूर्णमस्तु **मध्या** मध्ये **मा रीरिषत** मा हिंसिष्ट । रुष रिष हिंसायाम् । **गन्तोः** आङ् अत्र द्रष्टव्यः, आ गन्तोः आगमनात् यावत्स्वयमेव गच्छति तावन्मा रीरिषत ॥

[4]**अग्निष्ट इति** ॥ **अग्निः ते** तव **आयुः प्रतरां** प्रकृष्टतरं **दधातु** ददातु स्थापयतु वा । स एवाग्निः **ते** तव **पुष्टिं प्रतरां** प्रकृष्टतरां **कृणोतु** । **इन्द्रश्च मरुद्भिस्सह ते** तव पुष्टिं **ऋतुधा** ऋतावृतौ **कृणोतु** । स एवेन्द्रः **आदित्यैर्वसुभिस्सह ते** पुष्टिं **आदधातु** । इदमप्याचार्यपक्षे सुगमं, माणवकपक्षे तु अन्तरात्मशरीरात्मभेदेन योज्यम् ॥

[5]**मेधामिति** ॥ स्पष्टोऽर्थः ॥ **ददुः** दद्युः ॥

[6]**अप्सरास्विति** ॥ अप्सरस्सु । **दैवी** देवेषु भवा । **मानुषी** मनुष्येषु भवा **या सा मेधा** । तच्च **यश** इत्यपि द्रष्टव्यम् । इह कर्मणि **मां सा मेधा आविशतात्** ॥

**या मानुषी मेधा सा मामाविशतादिह । [7]इमं मे वरुण [8]तत्त्वा यामि [9]त्वं नो अग्ने [10]स त्वं नो अग्ने [11]त्वमग्ने अयाऽसि । [12]राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् । [13]तथ्सवितुर्वरेण्यमित्येषा । [14]अवृधम-**

[7—11]इमं म इत्यादि ॥ पञ्च गताः ॥

[12]आचार्यः कूर्चमारोहति—**राष्ट्रभृदिति** ॥ हे कूर्च ! त्वं **राष्ट्रभृदसि** राष्ट्रस्य भर्ताऽसि प्रशस्तोऽसि **आचार्यासन्दी** आचार्याणामासन्दी,* एवम्भूतात् त्वत् त्वत्तः अहं **मा योषं** यौतिः पृथग्भावे, वियुक्तो मा भूवम् ॥

[13]अथ सावित्री—**तत्सवितुरिति** ॥ तच्छब्दश्रुतेः यच्छब्दोऽध्याहर्तव्यः । यत् सर्वेषां ध्येयं **तद्देवस्य सवितुः वरेण्यं** वरणीयं **भर्गः** पापानां भर्जनं† तेजोमयं रूपं वयं **धीमहि** ध्यायामः। कीदृशस्य सवितुः? **यो नः** अस्माकं सर्वेषां **धियो** धर्मादिविषया बुद्धीः **प्रचोदयात्** प्रेरयेत् । सवित्राऽभ्यनुज्ञातो हि सर्वोऽपि कर्म करोति 'सविता वै प्रसवानामीशे'‡ इति ब्राह्मणम् ॥

---

[7—11] एते मन्त्राः (२२—२४) पृष्ठेषु लिखिताः.

[13]**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥** (सं. १-५-६.)

*आचार्याणामासनमासि च. †भञ्जनम्. ‡सं. २-१-६.

सौ सौम्य प्राण स्वं मे गोपाय । [15]ब्रह्मण आणी स्थः ॥ ४ ॥

त्वमग्ने अयाऽसि चत्वारि च ॥ ४ ॥

[1]सुश्रवस्सुश्रवसं मा कुरु यथा त्वꣳ सुश्रवस्सु-

---

[14]ओष्ठोपस्पर्शनम्—**अवृधमिति** ॥ वृद्धिः श्रीः, अहं **अवृधं** प्रवृद्धः श्रीमान् जातः सावित्रीग्रहणात् 'ऋचस्सामानि यजूंषि । सा हि श्रीरमृता सताम् *। 'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यते' † इति च ब्राह्मणम् । असाविति प्राण उच्यते शरीरसन्निधानात्, सौम्येत्यनुकूलाभिधानं. प्राण आत्मा । हे शरीरसन्निहित! **प्राण**! **सौम्य**! मदीयान्तरात्मन्! यदिदानीं **मे** ममान्तःप्रविष्टं सावित्र्याख्यं **स्वं** धनं तत् **गोपाय** रक्ष यथा न निर्गच्छेत्तथा कुरु ॥

[15]कर्णोपस्पर्शनम्—**ब्रह्मण इति** ॥ **ब्रह्मणः** सावित्रीलक्षणस्य मन्त्रस्य **आणी** कीले **स्थः** । लोडर्थे लट् । स्तं भवतम् ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने चतुर्थः खण्डः.

---

[1]दण्डमादत्ते—**सुश्रव** इति ॥ सुश्रवाः पालाशः, श्रूयते हि 'देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम'‡ इति ।

---

*ब्रा. १-२-१. †आप. ध. १-१-१०. ‡सं. ३-५-७.

**श्रवा अस्येवमहꣳ सुश्रवस्सुश्रवा भूयासं यथा त्वꣳ सुश्रवस्सुश्रवो देवानां निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम् । [2]स्मृतं च मेऽस्मृतं च मे तन्म उभयं व्रतं [3]निन्दा च मेऽनिन्दा च मे तन्म उभयं व्रतꣳ [4]श्रद्धा च मेऽश्रद्धा च**

---

तस्यामन्त्रणं, हे **सुश्रवः**! मामपि **सुश्रवसं** सुष्ठु श्रोतारं कुरु। यथा त्वमित्यादि पुनर्वचनमादरार्थं, तच्च स्पष्टार्थम् । **यथा त्वं देवानां निधिगोपोऽसि** निधिर्यज्ञः तं पालाशो गोपायति जुह्वादिरूपेण, **एवमहमपि** त्वद्धारणात् **ब्राह्मणानां निधेः ब्रह्मणो** वेदस्य **गोपो** गोप्ता **भूयासम्** । उपसर्जनस्यापि निधिशब्दस्य ब्राह्मणैस्सह * सम्बन्धः ॥

[2–10]अथ कुमारं वाचयति—**स्मृतं च म** इति ॥ **स्मृतं** चिन्तितं एवमिदं कर्तव्यमिति, तद्विपरीतं **अस्मृतं** असामर्थ्यात् आपदि† प्रवर्तितं, **तदुभयमपि मे** मम **व्रतम्** । **निन्दा** कुत्सा निन्द्यविषया । **अनिन्दा** वेदादिविषया । **श्रद्धा** कर्तव्यविषया। **अश्रद्धा** निषिद्धविषया । **विद्या** वेदितव्यस्य ज्ञानम् । **अविद्या** अवेदितव्यविषया । **श्रुतं** श्रवणं वेदतदङ्गादीनाम् । **अश्रुतं** पाषण्डागमादीनाम् । **सत्यं** यथादृष्टवचनं, एतत् स्वतः प्राप्तम् । **अनृतं** प्राणात्ययादिविषये । **तपो** भिक्षाचरणादि।

---

*ब्रह्मणा सह.　　†आचार्यादि.

मे तन्मं उभयं व्रतं [5]विद्या च मेऽविद्या च मे तन्मं उभयं व्रतꣳ [6]श्रुतं च मेऽश्रुतं च मे तन्मं उभयं व्रतꣳ [7]सत्यं च मेऽनृतं च मे तन्मं उभयं व्रतं [8]तपश्च मेऽतपश्च मे तन्मं उभयं व्रतं [9]व्रतं च मेऽव्रतं च मे तन्मं उभयं व्रतं [10]यद्ब्राह्मणानां ब्रह्मणि व्रतं यदग्नेस्सेन्द्रस्य सप्रजापतिकस्य सदेवस्य सदेवराजस्य समनुष्यस्य समनुष्यराजस्य सपितृकस्य सपितृराजस्य सगन्धर्वाप्सरस्कस्य यन्मं आत्मनं आत्मनिं व्रतं तेनाहꣳ सर्वव्रतो भूयासम्।

---

अशक्तौ तदकरणं अतपः । व्रतं अनध्ययनवर्जनादि । अव्रतं भयादिना तदतिक्रमः । यच्चान्यत् ब्राह्मणानां ब्रह्मणि वेदविषये व्रतं यच्च अग्नेरिन्द्रादिसहितस्य । यच्च मे मम आत्मनः आत्मनि व्रतं मयैवोत्प्रेक्षितं आचार्येणान्यार्थं प्रेषितस्य तदुपयोग्यर्थान्तरकर[1]णादि तेन अनेन सर्वप्रकारेण व्रतेन सर्वव्रतो भूयासम् । तत्राग्नेर्व्रतं पातृत्वं 'त्वमग्ने व्रतपा असि'[2] इति दर्शनात्, इन्द्रस्य प्राधान्यं, प्रजापतेः स्रष्टृत्वं, देवानां दातृत्वादि, देवराजस्य देवरञ्जनं, मनुष्याणां प्रियवचनं, मनुष्यराजस्य प्रजारक्षणं, पितॄणां पुत्रोत्पत्तिः, पितृराजस्य यमस्य सर्वसमत्वं गन्धर्वाणां देवस्तुतिः, अप्सरसां परिचरणे कौशलम् ॥

---

[1] अर्थान्तराहर. [2] सं. १-२-३.

[11]उदायुंषा स्वायुषोदोषंधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थामृताꣳ अनुं । [12]तच्चक्षुर्देवहिंतं पुरस्ताच्छुक्रमुच्चरंत् । पश्येम शरदंश्शतं जीवेम शरदंश्शतं नन्दांम शरदंश्शतं मोदांम शरदंश्शतं भवांम शरदंश्शतꣳ शृणवांम शरदंश्शतं प्रब्रंवाम शरदंश्शतमजींतास्स्याम शरदंश्शतं ज्योक्च सूर्यं

---

[11]उत्थापनमन्त्रः—उदिति ॥ अमृता देवाःताननु अहं **उदस्थां** उत्तिष्ठामि । तत्र विशेषः—**उदायुषा** आयुषा सहोत्तिष्ठामि । **स्वायुषा** स्वकीयेन शतसंवत्सरलक्षणेन सह **उदोषधीनां रसेन** रसो बलहेतुः तेन बलं लक्ष्यते तेनोत्तिष्ठामि । **उत्पर्जन्यस्य शुष्मेण** शुष्ममिति बलनाम पर्जन्यस्य यादृशं बलं तादृशेन बलेन उत्तिष्ठामि । उदस्थामिति सर्वत्रानुषङ्गः ॥

[12]आदित्योपस्थानम्—**तच्चक्षुरित्यादि** ॥ **तदिति** प्रसिद्धिमाह। **चक्षुः** चक्षुस्स्थानीयं लोकस्य **देवहितं** देवेन इन्द्रेण निहितं 'इन्द्रो दीर्घाय चक्षसे । आसूर्यं रोहयाद्दिवि '* इति दर्शनात्, **पुरस्तात्** पूर्वस्यां दिशि **उच्चरत्** उद्गच्छत् **शुक्रं** परिशुद्धं ज्योतिः सूर्याख्यं **पश्येम**, प्रार्थने लिङ्, एवमुत्तरेष्वपि लिङ्लोटौ । **जीवेम** सहषोडशं वर्षशतं समृद्धास्स्याम । **नन्दाम मोदाम** पुत्रपौत्रादिभिस्सह सन्तुष्याम । **भवाम** भूतिमन्तस्स्याम।

---

*ब्रा. १-५-८.

दृशे । [13]यस्मिन्भूतं च भव्यं च सर्वे लोकास्समाहिताः । तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णाम्यसौ ॥ ५ ॥

सुश्रवंस्सुश्रवंसमष्टौ ॥ ५ ॥

[1]परि त्वाऽग्ने परि मृजाम्यायुषा च धनेन च ।

---

**शृणवाम** प्रियहितवचनानि । **प्रब्रवाम** प्रवचने कर्तारस्स्याम । **अजीताः** अहिंसिताः स्याम **ज्योक्** दीर्घकालं **सूर्यं दृशे** द्रष्टुं च स्यामित्यनुषङ्गः ॥

[13]हस्तग्रहणमन्त्रः—**यस्मिन्भूतमिति** ॥ **यस्मिन्** प्रजापतौ **भूतं भव्यं** भविष्यच्च **सर्वे लोका** इदानीं वर्तमानाः **समाहिताः** समाश्रिताः । **तेन** तदनुज्ञया त्वामहं **गृह्णामि** । **मह्यं गृह्णामि त्वामहं** यथा त्वं मत्तो न विच्छिद्येथाः तथा गृह्णामि । प्रजापतिनेत्यादि पुनर्वचनमादरार्थम् । असाविति संबुद्ध्या माणवकस्य नामनिर्देशः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने पञ्चमः खण्डः.

---

[1]समिदाधाने परिमार्जनमन्त्रः—**परि त्वेति** ॥ हे **अग्ने**! **त्वां** अहं **परिमृजामि** सर्वतः शोधयामि । परिशब्दस्य द्विश्श्रुतेराख्यातमप्यावर्तते । आदरार्थं पुनर्वचनम् । **आयुषा च धनेन**

सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैस्सुगृहो गृहैस्सुपतिः पत्या सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः । [2]अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ॥ [3]एधोऽस्येधिषीमहि स्वाहा । [4]समिदसि समेधिषी-

---

च प्रार्थितेन । **सुप्रजा** इत्यादि । गतम् * । अत्र भूयासमिति विशेषः † । **पतिः** पालयिता आचार्यः । **मेधया** धारणावत्या धिया **सुमेधाः** । **सुब्रह्मा** शोभनवेदः **ब्रह्मचारिभिः** सहाध्यायिभिः 'पादं सब्रह्मचारिभ्यः' इति वचनात् ॥

[2]समिदाधानमन्त्रः—**अग्नय** इति ॥ तुभ्यं समिधं इमां **आहार्षं** आहरामि **बृहते** प्रभावते महते वा **जातवेदसे** जातधनाय जातप्रज्ञाय वा । आहरन्तं च **मां** यथा **त्वमग्ने समिधा** अनया **समिध्यसे** संदीप्यसे **एवं मामायुरादिभिः समेधय** संवर्धय । **सनिः** लाभः । अन्नस्यादनमन्नाद्यम् । अन्यत्प्रसिद्धम् ॥

[3]**एधोसीति** ॥ समिधं प्रतिवचनम् । हे समित् ! त्वं **एधोऽसि**

---

*२-३-२५. †सर्वत्र भूयासमिति शेषः

**महि स्वाहा । [5]तेजोऽसि तेजो मयि धेहि स्वाहा। [6]अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसा स्वाहा। [7]सं माऽग्ने वर्चसा सृज प्रजया च धनेन च स्वा-**

---

ञि इन्धी दीप्तौ, दीप्तिसाधनमस्यग्नेः । वयमपि त्वां आदधानाः **एधिषीमहि** प्रवृद्धास्स्याम ॥

[4]**समिदसीति** ॥ निगदव्याख्यातमेतत् ॥

[5]**तेजोसीति** ॥ दीप्तिहेतुत्वात् **मय्यपि तेजो धेहि** स्थापय ॥

[6]**अपो अद्येति** ॥ अप इति कर्मनाम । **अपः** समिदाधानलक्षणं कर्म **अद्य अन्वचारिषं** अनुक्रमेण करोमि । रसः इच्छा कर्मविषया श्रद्धा, तेन **रसेन समसृक्ष्महि** । एकवचवस्थाने बहुवचनम् । लिङर्थे लुङ् । संसृष्टो भवेयं समिदाधाने कर्मणि श्रद्धाऽपि मे वर्धता*मित्यर्थः । अथ वा रस इति ब्रह्मनाम 'स एष रसानां रसतमः'† इति श्रुतेः, त्वत्प्रसादात् मे ब्रह्मसायुज्यं भूयादित्यर्थः । **पयस्वान्** पय इति हविष उपलक्षणं, हविष्मान् भूत्वा हे **अग्ने**! त्वां अहं अहरहः **आगमम्** । लिङर्थे लुङ्। आगच्छेयम् । तमेवंभूतं **मां वर्चसा** दीप्त्या **संसृज** ॥

[7]**समिति** ॥ हे **अग्ने**! **मां वर्चसा प्रजया धनेन च संसृज** ॥

---

*वर्तता.

†छा. उ. १-१-३.

हा । [8]विद्युन्मे अस्य देवा इन्द्रो विद्यात्सह ऋषि-भिस्स्वाहा । [9]अग्नये बृहते नाकाय स्वाहा । [10]द्यावापृथिवीभ्याꣳ स्वाहा । [11]एषा ते अग्ने समित्तया वर्धस्व चाप्यायस्व च तयाऽहं वर्धमानो भूयासमाप्यायमानश्च स्वाहा । [12]यो माऽग्ने भागिनꣳ

[8]विद्युदिति ॥ अस्य द्वितीयार्थे षष्ठी, इमं मां देवाः विद्युत् छान्दसस्तकारः, विद्युः । बह्वृचाश्चैवमेवाधीयते । एवं कर्म कुर्वन्तं देवा जानीयुरित्यर्थः । इन्द्रश्च मां ऋषिभिः सह विद्यात् जानीयात् ॥

[9]अग्नय इति ॥ बृहते प्रभावते महते वा नाकाय 'दिवि नाको नामाग्निः'* इति ब्राह्मणम् । तस्मै ॥

[10]द्यावापृथिवीभ्यामिति ॥ द्याव्यापृथिव्यौ प्रसिद्धे ॥

[11]एषा त इति ॥ हे अग्ने! ते तुभ्यं एषा समित् दीयते, तया त्वं वर्धस्व च आप्यायस्व च आप्यायनमभिपूरणं, पूर्णश्च भव । अहमपि तया समिधा वर्धमानः आप्यायमानश्च भूयासम् ॥

[12]यो माऽग्न इति ॥ हे अग्ने! यो मां भागिनं भागप्राप्तियोग्यं सन्तं अथ अनर्थकोऽयं निपातः, अभागं चिकीर्षति कर्तुमिच्छति तं

*ब्रा. ३-२-३.

सन्तमथाभागं चिकीर्षत्यभागमग्ने तं कुरु मामग्ने भागिनं कुरु स्वाहा । [13]समिधमाधायाग्ने सर्वव्रतो भूयासꣳ स्वाहा । [14]ब्रह्मचार्यस्यपोऽशान कर्म कुरु मा सुषुप्थाः । भिक्षाचर्यं चराचार्याधीनो भव । [15]यस्य ते प्रथमवास्यꣳ हरामस्तं त्वा विश्वे

---

अभागं कुरु मां तु भागिनं कुरु । आदरार्थं पुनःपुनरामन्त्रणम् ॥

[13]समिधमिति ॥ हे अग्ने! अहं इमां समिधमाधाय सर्वव्रतः परिपूर्णव्रतो भूयासम् ॥

[14]संशासनम्—ब्रह्मचार्यसीति ॥ ब्रह्मचर्याश्रमं प्राप्तोसि । अपोऽशान अप एव मयाऽनुज्ञातः अशान* । कर्म कुरु समिदाहरणादि । मा सुषुप्थाः दिवा मा स्वाप्सीः 'अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति '† एवंविधो वा स्वापाभावः । भिक्षाचर्यं चर निमन्त्रणादिना स्वयमभुञ्जानोप्यस्मदर्थं भैक्षमाहर । आचार्याधीनो भव मया अननुज्ञातः याजनाध्यापनादि कस्यचिन्मा कार्षीः ॥

[15]वाससं आदानम्—यस्य त इति ॥ प्रथमवास्यं प्रथमाच्छादितं वासः वयं हरामः, तं त्वा विश्वे देवा अवन्तु । किञ्च—तमेव त्वां वर्धमानं सुजातं शोभनजन्मानं बहवो

---

* मयाऽननुज्ञातोऽप एवाशान. †आप. ध. १-४-२८.

अवन्तु देवाः । तं त्वा भ्रातंरस्सुवृधो वर्धमानम- नु जायन्तां बहवस्सुजातम् ॥ ६ ॥

सह ऋषिभिस्स्वाहा नवं च ॥ ६ ॥

[1]इमङ्ग् स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य सङ्ग्सद्यग्ने

---

**भ्रातरः सुवृधः** सुष्ठु वर्धयितारः* भूत्वा **अनुजायन्तां** त्वमपि एवंविधो भूयाः तवानुजा अप्येवंविधा भूयासुरित्यर्थः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने षष्ठः खण्डः.

---

[1]अथ समावर्तने समिदाधानम्—इमं स्तोममिति ॥ **इमं स्तोमं** इमां स्तुतिं **अर्हते** स्तुत्यर्हाय **जातवेदसे** जातधनाय जातप्रज्ञाय वा **संमहेम** । महिः पूजायामन्यत्र, इह तु करोत्यर्थे संस्कारे वा द्रष्टव्यः । कर्तुं संस्कर्तुं वा शक्नुयाम **मनीषया** स्वया बुद्ध्या **रथमिव** यथा तक्षा रथं करोति गन्तुकामो वा संस्करोति तद्वत् । किंकारणमग्नेस्स्तुतिः क्रियते? उच्यते, **भद्रा हि** हिशब्दो यस्मादित्यर्थे, यस्मात् **भद्रा** कल्याणी **नः** अस्माकं उपरि अस्मासु वा **प्रमतिः** प्रकृष्टा अनुग्रहात्मिका मतिः **अस्य** अग्नेः **संसदि** सभायां यस्मादयं यज्ञादिसभास्व-

---

*वर्धितारः, वर्धिताः.

**सख्ये मा रिषामा वयं तव ।** [2]**त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ।** [3]**शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मां हिंसीः ।** [4—11]**उष्णेन वायवुदकेनेत्येषः ।** [12]**इदमहममुष्यामुष्यायणस्य पा-**

---

स्माकमनुग्राहक इत्यर्थः । परः पादः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । हे **अग्ने! तव सख्ये** देवानां मनुष्याणां च स्तुत्यस्तोतृभावलक्षणं सख्यं तत्र वर्तमाना **वयं मा रिषाम** मा केनचिद्धिंसिष्महि ॥

[2]क्षुराभिमन्त्रणम्—**त्र्यायुषमिति** ॥ **त्र्यायुषं** कौमारयौवनस्थाविराणि त्रीण्यायूंषि तेषां समाहारः त्र्यायुषं, जमदग्न्यादीनां यादृशं त्र्यायुषं ममापि तादृशं **त्र्यायुषं अस्तु** । क्षुरकर्मणोऽनायुष्करत्वात् तत्साधनस्यैवमभिमन्त्रणम् ॥

[3]क्षुरं वप्त्रे प्रयच्छति—**शिवो नामेति** ॥ नामशब्दो निपातोऽवधारणे । शिव एव त्वमसि **स्वधितिः** वज्रः 'वज्रो वै स्वधितिः'[1] इति दर्शनात्, स ते **पिता** सर्वशस्त्रेषु तस्य प्रधानत्वात्, **नमस्ते अस्तु मा मा हिंसीः** ॥

[4—11]**उष्णेन वायवुदकेन इति** ॥ गतार्थाः ॥

[12]मेखलाया उपगूहनम्—**इदमहमिति** ॥ **अमुष्य** यज्ञशर्मणः **आमुष्यायणस्य** वात्स्यस्य वात्स्यायनस्य वा **पाप्मानमिदं अहं**

---

[1] सं. ६-३-७. (४—११) एते मन्त्राः (७८—८०) पुटेषु लिखिताः.

प्मानमुपंगूहाम्युत्तरो॑ऽसौ द्विषद्भ्यः । [13—15]आपो

उपगूहामि गपगूहनं अप्रकाशीकरणम् । सूत्रोक्तमुपगूहनमप्येतदेव। यन्मेखलाया उपगूहनं तत्पाप्मन एव उपगूहनत्वेन निरूप्यते। असौ यज्ञशर्मा द्विषद्भ्यः उत्तरः अधिकोऽस्तु ॥

[13]स्नानमन्त्राः—आपो हिष्ठेति ॥ हे आपः ! यूयं मयोभुवः स्थ मय इति सुखनाम, सुखस्य भावयित्र्यः स्थ । हिः प्रसिद्धौ । ताः यूयं नः अस्मान् ऊर्जे अन्नाय दधातन धत्त अन्नमस्मभ्यं धत्तेत्यर्थः । महे महते रणाय रमणीयाय चक्षसे दर्शनाय दधातन ॥

[14]य इति ॥ वः युष्माकं सम्बन्धी यश्शिवतमो रसः तस्य तृतीयार्थे षष्ठी, तेन रसेन नः अस्मान् भाजयत सः यथा अस्मान्भजते तथा कुरुत इह लोके उशतीः कामयमाना इव मातरो यथा मातरो वत्सला भूत्वा स्तन्यं पाययन्ति तद्वत्॥

[15]तस्मा इति ॥ तस्मै रसाय अरं शीघ्रं पर्याप्तं वा गमाम गच्छेम वः युष्मान् तद्रसस्य पानार्थं युष्मान् गच्छेम।

[(13—15)]आपो॒ हिष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन । म॒हे रणा॑य॒ चक्ष॑से ॥ यो वः॑ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑ । उ॒श॒तीरि॑व मा॒तरः॑ ॥ तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ । आपो॑ ज॒नय॑था च नः ॥ (सं. ५-६-१.)

हिष्ठा मयोभुव इति तिस्रो [16—18]हिरण्यवर्णाश्शुचयः पावका इति तिस्रः । [19]अन्नाद्याय व्यूहध्वं दी-

---

यस्येति तृतीयार्थे षष्ठी, येन रसेन **क्षयाय**। निवासवचनोऽयं, आद्युदात्तत्वात्, द्वितीयार्थे चतुर्थी । क्षयं निवासं अस्मदीयं **जिन्वथ** प्रीणयथ । येन च हे आपः! **जनयथ** पुत्रपौत्रादिभिः प्रजातान् कुरुत नः अस्मान् ॥

[16—18]**हिरण्यवर्णाश्शुचय इति** ॥ गताः । यदप्यगतं तदपि स्पष्टम् । इन्द्रः पर्जन्यः तस्य मेघेष्वाविर्भावात् अप्सुजातत्वम् ॥

[19]दन्तधावनम्—**अन्नाद्यायेति** ॥ **अन्नाद्याय** अन्नादनाय **व्यूहध्वं** व्यूहः पृथग्भावः पृथग्भवत हे दन्ताः! मलेन पृथग्भूता

---

(16—18)हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्तान आपश्शꣳ स्योना भवन्तु ॥ यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्ता न आपश्शꣳ स्योना भवन्तु ॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपश्शꣳ स्योना भवन्तु ॥
(सं. ५ ६-१.)

**र्घायुरहमन्नादो भूयासम् । सोमो राजा यमागमत्स मे मुखं प्रवेक्ष्यति भगेन सह वर्चसा।** [20]**सोमस्य तनूरसि तनुवं मे पाहि स्वा मा तनूराविश।** [21]**नमो ग्रहाय चाभिग्रहाय च** [22]**नमः शाकजञ्जभाभ्यां** [23]**नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः।**

भवत । अहं च युष्माभिः शुद्धैः **दीर्घायुः अन्नादश्च भूयासं सोमो राजा यमागमत्** दन्तधावनकाष्ठस्य वार्क्षत्वात् वृक्षाणां च सोमाधिष्ठितत्वादेवमुच्यते । **स** चागतः **मे** मम **मुखं प्रवेक्ष्यति भगेन** सौभाग्येन **वर्चसा** दीप्त्या च **सह** । दन्तशोधने सति मुखमतीव शोभते इत्युच्यते ॥

[20]अनन्तरं वासः परिधत्ते—**सोमस्य तनूरसीति** ॥ हे वासः! त्वं **सोमस्य तनूरसि** 'सौम्यं वै वासः'* इति श्रुतेः । एवं भूतं त्वं मे **तनुवं तनूं पाहि** त्वयाऽऽच्छादितं शरीरं रक्षितं भवति। न केवलं सोमस्य तनूः, किं तर्हि? ममापि **स्वा तनूः** शरीरतुल्यत्वादेवमुच्यते। तथा च मन्त्रान्तरं 'आत्मा पितुस्तनूर्वास ओजोदा अभ्यञ्जनम्'† इति। एवंभूतं त्वं **मामाविश** ॥

[21—23]देवताभ्यः चन्दनप्रदानम्—**नम** इति ॥ नमआदयस्त्रयो मन्त्राः । देवताश्च मान्त्रवर्णिक्यः **ग्रहश्च अभिग्रहश्च शाकजञ्जभौ च अभिग्राहिण्यश्च** । एताश्च अलङ्कारसमये पुरुषमुपसर्पन्ति ताभ्यश्चन्दनप्रदानम् ॥

*ब्रा. २-२-५.　　　　†ऋवसं ८-३-२४.

[24]अप्सरस्सु यो गन्धो गन्धर्वेषु च यद्यशः । दैवो यो मानुषो गन्धस्स मां गन्धस्सुरभिर्जुषताम् । [25]इयमोषधे* त्रायमाणा सहमाना सहस्वती । सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोतु । [26]अपाशोऽस्युरो मे मा सꣳ शारीश्शिवो मोप तिष्ठस्व

[24]उत्तरया आत्मानमनुलिम्पति—अप्सरस्स्विति ॥ अप्सरसामुपभोगयोग्यो **यो गन्धः**, **गन्धर्वेषु च यद्यशः** कीर्तिः प्रसिद्धा गन्धर्वेषु च यः प्रसिद्धो गन्धः यद्योगात्ते गन्धर्वा भवन्ति गन्धवन्तो गन्धर्वा इति, यश्च **दैवो गन्धः** यश्च **मानुषः स** सर्वोऽपि **सुरभिर्गन्धः**, **मां जुषतां** भजताम् । सुरभिर्घ्राणतर्पणः ॥

[25]सौवर्णं मणिं उदपात्रे परिप्लावयति—**इयमोषध इति** ॥ पार्थिवस्य सुवर्णस्य पृथवीत्वेन स्तुतिः **इयं** पृथिवी **ओषधे*** ओषधीः । विभक्तिलोपश्छान्दसः । **त्रायमाणा** ओषधीनामाधारभूतेत्यर्थः । **सहमाना** सर्वकार्येषु समर्था **सहस्वती** बलवती एवम्भूता पृथिवी **सा मां हिरण्यवर्चसं** हिरण्यवद्दीप्तं **करोतु ब्रह्मवर्चसिनं** ब्रह्मवर्चसयुक्तं च **मां करोतु** ॥

[26]ग्रीवास्वाबध्नाति—**अपाशोऽसीति** ॥ येन चोरादिः बध्यते स पाशः स त्वं न भवसि । अतश्च **उरः** उरस्थलं **मे मा संशारीः** मा हिंसीः ग्रीवास्वाबद्ध्यमानस्य अवपतनादुरसो बाधशङ्का । **शिवो मा उपतिष्ठस्व** दीर्घायुत्वाय । कीदृशाय ? **शतशारदाय** शतं

*ओषधि.

दीर्घायुत्वायं शतशारदाय। शतꣳ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय। [27—32]रेवतीस्त्वा व्यक्ष्णन्नित्येताः ॥ ७ ॥

सह वर्चसा नवं च ॥ ७ ॥

[1]आयुष्यं वर्चस्यꣳ सुवीर्यꣳ रायस्पोषमौद्भि-

---

शरदो भावि यद्दीर्घायुष्यं तस्मै शतम्। चतुर्थ्यर्थे प्रथमा। शताय **शरद्भ्यः** शतवर्षार्थमायुषे शतवर्षभावि यदायुः तदर्थम्। **वर्चसे जीवात्वै** जीवातुः जीवनं तस्मै **पुण्याय** प्रशस्ताय शिवो मोप तिष्ठस्वेत्येव। आदरार्थं चायुषः पुनर्वचनम् ॥

[27—32]**रेवतीस्त्वा व्यक्ष्णन्** इत्यादि ॥ गताः। ताभिरेव द्वितीयं वासः परिधत्ते ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने द्वितीयप्रश्ने सप्तमः खण्डः.

---

[1]तस्य दशायां प्रवर्तौ प्रबध्य जुहोति—**आयुष्यमिति** ॥ आयुषो निमित्तं **आयुष्यं** वर्चसो निमित्तं **वर्चस्यं सुवीर्यं** सुष्ठु वीर्ययुक्तं **रायस्पोषं** रायो धनस्य पोषयितृ सर्वधनस्य हिरण्यमूल-

---

(27—32) एते मन्त्राः (८२–८४) पृष्ठेषु लिखिताः.

**द्यम् । इदꣳ हिरण्यं जैत्र्यायाविशतां माम् । [2]उच्चैर्वादि पृतनाजि सत्रासाहं धनञ्जयम् । सर्वास्समृद्धीर् ऋद्धयो हिरण्येऽस्मिन्त्समाहिताः । [3]शुनमहꣳ हिरण्यस्य पितुरिव नामाग्रभैषम् । तं मा**

---

त्वात् **औद्भिद्यं** उद्भिनत्ति प्रकाशते* इति उद्भित् उद्भिदेव औद्भिद्यं यशस्करमित्यर्थः । एवं भूतं **इदं हिरण्यं जैत्र्याय** जयहेतुः जैत्रं तदेव जैत्र्यं कर्म तस्मै होमाय जयायैव **मामाविशतां** आविशतु ॥

[2]**उच्चैर्वादीति** ॥ उच्चैर्वादयतीति **उच्चैर्वादि** हिरण्यवन्तो हि उच्चैर्वदन्ति । **पृतनाजि** । छान्दसस्तुगभावः । पृतनाजित् । **सत्रासाहं** सत्रेत्यव्ययं सत्यनाम सत्यमेवाभिभवितृ शत्रूणां, **धनञ्जयं** धनस्यापि शत्रुसम्बन्धिनो जैत्रं, किं बहुना ? **सर्वा ऋद्धयः** कीदृश्यः ? **समृद्धीः** समृद्धयः समृद्धाः समग्रा इत्यर्थः । तथैव पाठो बह्वृचानाम् । **हिरण्येऽस्मिन् समाहिताः** सम्यगाहिताः ॥

[3]शुनमहमिति ॥ शुनमिति सुखनाम । **शुनं हिरण्यस्य नाम अहं अग्रभैषं** अग्रहीषं **पितुरिव** यथा पितुर्नाम पुत्रः पुनःपुनः कीर्तयति तद्वत् **तं** त्वन्नाम कीर्तयन्तं **मां हिरण्यवर्चसं** हिरण्यवद्दीप्तं **कुरु** हे हिरण्य! । किञ्च—**पूरुषु** पुरु इति बहुनाम, तस्यैव छान्द-

---

*प्रकाशयते.

**हिरण्यवर्चसं पूरुषु प्रियं कुरु । [4]प्रियं मा देवेषु कुरु प्रियं मा ब्रह्मणे कुरु । प्रियं विश्येषु शूद्रेषु प्रियꣳ राजसु मा कुरु । [5]या तिरश्ची निपद्यसेऽहं विधरणी इति । तां त्वा घृतस्य धारया यजे सꣳराधनीमहम् । [6]सꣳराधन्यै देव्यै स्वाहा [7]प्रसाधन्यै**

---

सं दीर्घत्वं, पूरुषु बहुषु, षष्ठ्यर्थे सप्तमी । बहूनां मां **प्रियं कुरु** यथाऽहं सर्वेषां प्रियस्स्यां तथा कुरु ॥

[4]एतदेव प्रपञ्चयति—**प्रियं मा इति** ॥ सर्वत्र षष्ठ्यर्थे सप्तमी । **ब्रह्मणे** ब्राह्मणे । ब्राह्मणशब्दस्य छान्दसं ह्रस्वत्वम्, जातावेकवचनम् । **विश्येषु** वैश्येषु । छान्दसं ह्रस्वत्वम् । **राजसु** क्षत्रियेषु हे हिरण्य ! त्वत्संस्पृष्टाज्यहोमात् देवादीनामेषां प्रियस्स्यामित्यर्थः ॥

[5]**या तिरश्चीति** ॥ संराधनी नाम देवता, सा च भूमिरित्येके । मध्यमावस्थाना वागित्यन्ये । हे संराधनि ! **या** त्वं **तिरश्ची** तिर्यग्भूता **निपद्यसे** शेषे **अहं** सर्वस्य भूतस्य **विधरणी** विधारयित्री **इति** अनया बुद्ध्येति भूमिपक्षे । वाक्पक्षे तु विधरणं निवारणं होमविघ्नकारिणामहं निवारयित्रीत्यनया बुद्ध्या तेषामप्रवेशाय या त्वं द्वारदेशे तिर्यग्भूता शेष इति, **तां त्वा घृतस्य धारया संराधनीमहं यजे** ॥

[6–7]उत्तरौ स्पष्टौ ॥ प्रसाधन्यपि सैव संराधनी, प्रकर्षेण साधयित्रीति देवतान्तरं वा ॥

देव्यै स्वाहा । [8]सम्राजं च विराजं चाभिश्रीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳ सृजामसि । [9]शुभिके शिर आ रोह शोभयन्ती मुखं मम । मुखꣳ हि मम शोभय भूयाꣳसं च भगं कुरु । [10]यामाहरज्जमदग्निश्श्रद्धायै कामयान्यै*।

---

[8]सम्राजं चेति ॥ आद्यपादस्य चतुर्थपादे मेत्यनेन सम्बन्धः । सम्राजं च विराजं च मा मां संसृजामसि । एकस्मिन् बहुवचनम् । संसृजामि । केन ? या च नः मम गृहे अभिश्रीः अभिमुखा श्रीः । चकारो वक्ष्यमाणापेक्षया । या च राष्ट्रस्य मुखे लक्ष्मीः तया मा संसृजामसि । सम्यग्दीप्यमानः सम्राट्, विविधं दीप्यमानो विराट् ॥

[9]उत्तराभ्यां स्रग्बन्धनम्—शुभिके शिर इति ॥ शुभैव शुभिका स्वार्थे कः । हे शुभिके ! स्रक् ! मम शिर आरोह मम मुखं शोभयन्ती भूत्वा । आदरार्थं पुनरुच्यते—मुखं हि मम शोभय । हिशब्दः पादपूरणः । भूयांसं भगं सौभाग्यं च कुरु ॥

[10]यामाहरदिति ॥ यां स्रजं आहरत् आहृतवान् जमदग्निः। कस्यै ? श्रद्धायै देव्यै । कीदृश्यै ? कामयान्यै* कामयमानायै। इमां ईदृशीं तां स्रजं अहमपि नह्ये शिरसि बध्नामि भगेन वर्चसा सह ॥

---

* कामायान्यै.

इमां तामपिं नह्ये॒ऽहं भगेन स॒ह वर्चसा । [11]यदा-
ञ्जनं त्रैककुदं जा॒तं हि॒मवत उ॒परि॑ । तेन वामाञ्जे
तेज॑से वर्च॑से भगाय च ॥ ८ ॥

स॒ꣳराधनीमहं नवं च ॥ ८ ॥

[1]मयि पर्वतपूरुषं [2]मयि पर्वतवर्च॒सं [3]मयि पर्व-
तभेष॒जं [4]मयिं पर्वतायुषम् । [5]यन्मे॒ वर्चः पु॒रागत-

---

[11]आञ्जनमन्त्रः—यदाञ्जनमिति ॥ त्रिककुन्नाम पर्वतः तत्र भवं त्रैककुदं यच्च हिमवत उपरि जातं तेन अञ्जनेन हे अक्षिणी ! वां युवां आञ्जे । किमर्थं ? तेजसे प्रकाशार्थं वर्चसे दीप्त्यर्थं भगाय सौभाग्यार्थं च ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने अष्टमः खण्डः.

---

[1—4]मयि पर्वतपूरुषमिति ॥ पर्वते यादृशं पूरुषं पौरुषं पुंस्त्वं धारणशक्तिः तत्पर्वतपूरुषं मयि भवतु यादृशी च पर्वतस्य वर्चः दीप्तिः श्लक्ष्णता, यच्च पर्वते भेषजं, यच्च पर्वते आयुषं पर्वतस्यायुः तत्सर्वं मयि भवतु ॥

[5]आदर्शावेक्षणमन्त्रः—यन्मे वर्च इति ॥ यत् मे मम वर्चः

आत्मानमुपतिष्ठति* । इदं तत्पुनरादद्दे दीर्घायुत्वाय वर्चसे । [6]प्रतिष्ठे स्थो देवतानां मा मा संतासम् । [7]प्रजापतेश्शरणमसि ब्रह्मणश्छदिर्विश्वजनस्य छायाऽसि सर्वतो मा पाहि । [8]देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा-

---

परागतं मत्तो निर्गतं आत्मानं आदर्शतलस्थितं मां उपातिष्ठति प्राप्नोति* इदं तत् वर्चः पुनराददे दीर्घायुत्वाय वर्चसे ॥

[6]उपानद्ग्रहणमन्त्रः—प्रतिष्ठे स्थ इति ॥ प्रतिशब्दः प्रशब्दार्थे । हे उपानहौ ! युवां प्रतिष्ठे प्रस्थानसाधने स्थः देवतानां अपीत्यध्याहार्यम्, देवतानामपि, किमुतास्माकम् । मा मा संतासं व्रणोत्पादेनन† सन्तापं मा कार्ष्ट कण्टकादिकृतो वा सन्तापो मे मा भूदित्यर्थः ॥

[7]छत्रधारणमन्त्रः—प्रजापतेरिति ॥ हे छत्र ! प्रजापतेः शरणं गृहं असि ब्रह्मणः छदिरसि छदिः पटलं एवंनाम प्रशस्तमित्यर्थः । किं बहुना ? विश्वजनस्य छायाऽसि छायाकार्यसि एवम्भूतस्त्वं सर्वतो मा पाहि ॥

[8]दण्डादानमन्त्रः—देवस्य त्वेति ॥ देवस्य सवितुः प्रसवे अनुज्ञायां सत्यां अश्विनोर्बाहुभ्यां तदधिष्ठिताभ्यां मम बाहुभ्यामित्यर्थः । एवं पूष्णो हस्ताभ्यामिति । मध्यमसन्धेरुपरिभागो बाहुः, अधोभागो हस्तः । त्वामाददे द्विषतो वधाय श्वादे-

---

* उपातिष्ठतु प्राप्नोतु.　　† प्रयाणोत्पादनेन.

**दंदे द्विषतो वधायेन्द्रस्य वज्रोसि वार्त्रघ्नश्शर्म मे भव यत्पापं तन्निवारय । [9–10]देवीष्षडुर्वीरित्येषा ।**

निस्सारणाय **इन्द्रस्य वज्रोऽसि** यथेन्द्रस्य वज्रः तथा मम त्वमसि **वार्त्रघ्नः** वृत्र इति शत्रुनाम तस्य हन्ता वृत्रहा स एव वार्त्रघ्नः एवंभूतस्त्वं **शर्म मे भव** सुखकरो भव **यत्पापं** अनर्थकारि श्वादि **तन्निवारय** ॥

[9]दिशामुपस्थानम्—**देवीष्षडिति** ॥ त्रीणि दिशामामन्त्रणानि। **देवीः**! हे देव्यः! चतस्रः प्रधाना दिशः प्राच्यादयः ऊर्ध्वाऽधरा चेति **षट्! उर्वीः**! उर्व्यः! विस्तीर्णाः! **उरु** विस्तीर्णं प्रभूतं धनं* **नः** अस्मभ्यं **कृणोत** कुरुत । हे **विश्वे देवासः!** तासामेव दिशामधिपतयस्सर्वे देवाः! इन्द्रादयः! यूयं चेह कर्मणि **वीरयध्वं** वीरकर्म कुरुत वीरवन्तं पुत्रवन्तं वा मां कुरुत ॥

[10]नक्षत्राणां चन्द्रमसश्चोपस्थानम्—**मा हास्महीति** ॥ अत्र राजन्नित्येनेन नक्षत्राणि सूच्यन्ते । हे नक्षत्राणां **राजन्! सोम**! युष्मत्प्रसादात् वयं **प्रजया मा हास्महि** हानिः त्यागः त्यक्ता मा भूम । **मा च तनूभिः** हास्महि पुत्रादिशरीरापेक्षं बहुवचनम् । **मा रधाम द्विषते** । रधिः वशीकरणकर्म, षष्ठ्यर्थे चतुर्थी । द्विषतो वश्या मा भूम ॥

**[(9–10)]देवीष्षडुर्वीरुरुणः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥**(सं. ४-७-१४)

*सौभाग्यं.

[11]राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषं [12]राष्ट्रभृदसि सम्राडासन्दी मा त्वद्योषं [13]राष्ट्रभृदस्यधिपत्नया-सन्दी मा त्वद्योषम् । [14]आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे । अस्मिन्कुले ब्रह्मवर्चस्यसानि । [15]मयि महो मयि यशो मयीन्द्रियं वीर्यम् । [16]आ मां गन् यशसा वर्चसा सꣳसृज पयसा तेजसा

[11—13]अथमधुपर्कमन्त्राः—**राष्ट्रभृदिति** ॥ गतम्* ॥ सम्राट् अभिषिक्तः क्षत्रियः तदनुरूपमासनं **सम्राडासन्दी** । अधिपतिर्मण्डलाधिपतिः अनभिषिक्तः तस्यासनं **अधिपत्नयासन्दी** । नकारश्छान्दस' उपजनः ॥

[14]पाद्याभिमन्त्रणम्—**आपः पादेति** ॥ पादाववनिज्येते प्रक्षाल्येते याभिस्ताः **पादावनेजनीः** पादावेनजन्यः ताः **आपो मे द्विषन्तं नाशयन्तु । अस्मिन्कुले** अहं **ब्रह्मवर्चसी** असानि भूयासम् ॥

[15]आत्मनः प्रत्यभिमर्शः—**मयि मह इति** ॥ **महः** पूजा, **यशः** कीर्तिः, **इन्द्रियं** चक्षुरादि, **वीर्यं** रेतः । भवत्विति शेषः । ब्राह्मणेन पादे स्पृष्टे एतेषामपगमशङ्कया प्रार्थ्यते ॥

[16]अर्घ्याभिमन्त्रणम्—**आ मा गन्निति** ॥ हे अर्घ्योदक! त्वं **मां आगन्** आगमः आगच्छ वा । आगत्य च **यशसा वर्चसा** च मां **संसृज पयसा** क्षीरेण **तेजसा** च । किञ्च—एतैः सं-

*२-४-१२.

च । तं मां प्रियं प्रजानां कुर्वधिपतिं पशूनाम् । [17]विराजो दोहोऽसि विराजो दोहमशीय मम पद्याय विराज । [18]समुद्रं वः प्र हिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥ ९ ॥

अस्मानि षट् ॥ ९ ॥

सृष्टं तं मां प्रजानां प्रियं कुरु पशूनां च गवादीनां अधिपतिं कुरु॥

[17]अञ्जलावानीयमानेऽर्घ्ये जपति—विराज इति ॥ विराट् अन्नं 'अन्नं विराट्' तस्य त्वं दोहोऽसि दोहः क्षरणं अतश्च त्वत्परिग्रहात् विराजो दोहमशीय प्राप्नुयाम् । मम पद्याय पदं स्थानं तत्र भवः पद्यः मम यः पद्यः मत्स्थानापन्नः पुत्रः तस्मै विराज दीप्यस्व तमप्येवंविधं कुरु ॥

[18]शेषं पुरस्तान्निनीयमानमुत्तरयाऽनुमन्त्रयते—समुद्रं व इति ॥ हे आपः! वः युष्मान् समुद्रं प्रहिणोमि प्रापयामि । यूयं स्वां योनिं समुद्रं अपिगच्छत प्रतिगच्छत । सर्वासामपां समुद्रो योनिः । अहमपि युष्मत्प्रसादात् प्रजया अच्छिद्रः निरन्तरो भूयासं प्रजा मे मा विच्छेदि । मा च मत् मत्तः परासेचि पयः । पुनस्तदुपयोग्यं यथा न भवति तथा सेकः परासेकः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने नवमः खण्डः.

*सं. २-५-१०.

[1]त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि । तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् । [2]आ मा गन्नित्येषा । [3]अमृतोपस्तरणमस्य[4]मृतापिधानमसि । [5]यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम् । तेनाहं मधुनो मधव्येन परमेणा-

---

[1]उत्तराभ्यां मधुपर्कमभिमन्त्रयते—**त्रय्यै विद्याया इति** ॥ त्रयो वेदास्त्रयी विद्या तस्यै, षष्ठयर्थे चतुर्थी । तस्या **यशोऽसि** यशः गोमधुपर्कार्हो वेदाध्यायीति । किञ्च—**यशसो यशोऽसि** प्रशंसापरमेतत् । यथा आभरणस्याभरणमिति । **ब्रह्मणो** वेदस्य **दीप्तिरसि** । **तं मा प्रियमित्यादि** गतम्* ॥

[2]**आ मा गन्निति** ॥ गतम्* ॥

[3]अप आचामति—**अमृतोपस्तरणमसीति** ॥ **अमृतस्य** अमृतसदृशस्य त्वं **उपस्तरणमसि** यथा अवदानानामुपस्तरणम् ॥

[4]उपरिष्टादप आचामति—**अमृतापिधानमसीति** ॥ **अमृतस्य** त्वं **अपिधानमसि** ॥

[5]मधुपर्कं प्राश्नाति—**यन्मधुन इति** ॥ मधुनि भवं **मधव्यं** **मधुनः** संबन्धि **यत्** मधव्यं, यथा गवां गोपतिः वसूनां वसुपतिरित्यादौ गोपतिर्वसुपतिरित्यतः परमार्थतो † नातिरिच्यते, अथ चोभयं प्रयुज्यते तथेहापि मधुनो मधव्यमिति । अर्थस्तु

---

(2) अयं मन्त्रः (११७) पत्रे लिखितः. *२-९-१६. † वसुपतिरित्यर्थतो.

**न्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि ।** [6]**गौ-रस्यपहतपाप्माऽपं पाप्मानं जहि मम चामुष्यं च ।** [7]**अग्निः प्राश्नातु प्रथमस्स हि वेद यथा हविः। अनष्टमस्माकं कृण्वन्ब्राह्मणो ब्राह्मणेभ्यः ।** [8]**यज्ञो**

मधव्यमित्येतावानेव । किंपुनस्तत्? **परममन्नाद्यं** इदं हि परममन्नादनं यन्मधुनः प्राशनं **वीर्यं** वीर्यकरम् । एवम्भूतं यत् मधव्यं **तेन मधुनो** मधव्येन **परमेणान्नाद्येन वीर्येण** । पूर्वानुसारेण योज्यम् । अहमपि **परमोऽन्नादो** मधव्यश्च **असानि** भूयासम्, मधुपर्कार्हो मधव्यः ॥

[6]गां निवेदितामभिमन्त्रयेते—**गौरसीति** ॥ हे **गौः**! त्वं अ**पहतपाप्माऽसि** ततश्च **पाप्मानं अपजहि** । कस्य? **मम** च **अमुष्य** च दातुः ॥

[7]आलम्भनपक्षे वपाहोममन्त्रः—**अग्निरिति** ॥ अयं **अग्निः प्रथमः प्राश्नातु** किमर्थम्? **स हि वेद यथा हविः** समीचीनमसमीचीनं वा । स च प्राश्नन् **अनष्टमस्माकं कृण्वन्** प्राश्नातु अस्माकमपि शेषयित्वैव * प्राश्नातु । कीदृशोऽग्निः? **ब्राह्मणेभ्योपि ब्राह्मणः** अतिशयेन ब्राह्मण इत्यर्थः । अथवा—ब्राह्मणेभ्य इति षष्ठ्यर्थे चतुर्थी । ब्राह्मणानामस्माकमनष्टं कुर्वन्, स्वयं च ब्राह्मण इति ॥

*अस्माकमविशेषयित्वैव.

वर्धतां यज्ञस्य वृद्धिमनु वर्धाऽपचितिरस्यपचितिं मा कुर्वपचितोऽहं मनुष्येषु भूयासम् । [9]गौर्धेनुभव्या [10]माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रणु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । [11]पिबतूदकं

---

[8]उत्सर्गपक्षे जपः—यज्ञ इति ॥ अयं मनुष्ययज्ञोऽस्मत्पूजालक्षणो **वर्धतां** उत्सर्गपक्षेऽपि वैकल्यं मा भूत् । **तस्य यज्ञस्य वृद्धिमनु** वृद्धेः पश्चात् हे गौः ! त्वमपि **वर्ध** वर्धस्व **अपचितिरसि** तत्साधनत्वात् **मां** च **अपचितिं** कुरु । कोऽर्थः? **अहं** त्वामुत्सृजन् **मनुष्येषु अपचितः** पूजितः **भूयासम्** ॥

[9—11]**गौर्धेनुभव्येति** ॥ **गौरियं धेनुभव्या** धेनुर्भविष्यन्ती, उत्सर्गपक्षे स्तुत्यर्थमिदं, उत्सृष्टा हि गौरियं धेनुर्भविष्यति ततश्च महाफला । आलम्भपक्षे तु क्षणिका तृप्तिः । किञ्च—इयं रुद्रादीनां देवानां मात्रादिस्थानीया सर्वेषां यज्ञभागित्वात् तस्य चाज्यादिगव्यसाध्यत्वात्* । **अमृतस्य** अमृतत्वप्राप्तिहेतोर्यज्ञस्य **नाभिः** प्रधानावयवः आज्यादिद्वारेण 'एष वाव यज्ञो यदाज्यम्'† इति श्रुतेः । एवंनाम प्रशस्तेयं अतश्च **प्रणुवोचं** नुः क्षिप्रार्थे, क्षिप्रं प्रकर्षेण च ब्रवीमि । **चिकितुषे** कित ज्ञाने, जानते **जनाय** । किं ब्रवीमि? **मा गां अनागां** अनागसं इमां

---

*तस्याश्चाज्यादिगव्यसाधनत्वात्. †सं. २-६-३.

तृणान्यत्तु । ओमुत्सृजत । [12]भूतम् । [13]सा विराट् । [14]तन्मा क्षायि तस्य तेऽशीय तन्म ऊर्जं धाः । [15]ओं कल्पयत ॥ १० ॥

भूयासमष्टौ च ॥ १० ॥

---

गां अदितिं अखण्डितां मा वधिष्ट । एषा कामं उदकं पिबतु । तृणानि च अत्तु । ओमुत्सृजत उत्सृजतेति प्रसिद्धेऽर्थे, ओमित्यनुज्ञावचनं, सर्वैरनुज्ञातामुत्सृजत ॥

[12]सिद्धेऽन्ने भूतमित्याह । भूतं सिद्धमित्यर्थः ॥

[13-15]तथोक्ते उत्तरान् जपति—सा विराडिति ॥ विराट्छन्दस्य स्त्रीलिङ्गत्वात् सेत्युक्तम् । तदन्नं विराट् विविधं राजत इति कृत्वा । तन्मा क्षायि क्षीणं मा भूत् । तस्य ते । द्वितीयार्थे षष्ठी । तत् त्वा अशीय अश्नीयां तत् त्वं मे मह्यं ऊर्जं बलं धाः धेहि देहि । ओमित्यनुज्ञायाम् । कल्पयत उपनयत हे परिचारकाः ! ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डमन्त्रव्याख्याने

दशमः खण्डः.

---

[1–4]धाता ददातु नो रयिमिति चतस्रो [5–8]य-

---

[1]सीमन्तोन्नयने होममन्त्राः—धाता ददात्विति ॥ जगतः ईशानः पतिः पालयिता च स धाता नः अस्मभ्यं रयिं धनं ददातु । ददच्च सः नः अस्मान् पूर्णेन कामेन वावनत् । वन षण सम्भक्तौ, पञ्चमो लकारः । यथा अस्मत्कामः पूर्यते तथा नः संभजेत ॥

---

(1)धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ (2)धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान । धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ॥

(3)धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः ॥

(4)धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा अमृतास्संव्ययन्तां विश्वे देवासो अदितिस्सजोषाः ॥ (सं. ३-३-११.)

(5)यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥

[2]धातेति ॥ स एव **धाता प्रजायाः उत रायः** धनस्यापि **ईशे** ईष्टे । **धातैव इदं** विश्वं **भुवनं जजान** अन्तर्भावितण्यर्थो जनिः, जनयामास । **धातैव च यजमानाय** च **पुत्रं दाता** । तृन्नन्तमेतत् । **तस्मै** एवम्भूताय धात्रे **घृतवत्** घृतयुक्तं **हव्यं विधेम** । विदधातिरन्यत्र परिचरणकर्मा, इह तु दाने द्रष्टव्यः । दद्याम् । विभक्तिव्यत्ययो वा, घृतवता हव्येन तं परिचरेमेति । उशब्दोऽनर्थकः ॥

[3]धातेति ॥ स एव **धाता नः रयिं ददातु** । कीदृशीं ? **प्राचीं** प्राक्कालभवां क्रमागतां यादृशी पूर्वेषां तादृशीमित्यर्थः । **जीवातुं** जीवनाय पर्याप्तां **अक्षितां** क्षयरहिताम् । **वयं** तस्य **देवस्य** धातुः **सुमतिं** शोभनां मतिं भक्तेष्वनुग्रहात्मिकां बुद्धिं **धीमहि** ध्यायामः **सत्यराधसः** सत्यधनस्य ॥

[4]धातेति ॥ स एव **धाता दाशुषे** दाशृ दाने, चरुपुरोडाशादीनां

---

**(6)यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् । अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति ॥**

**(7)त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः । न त्वामिन्द्रातिरिच्यते ॥ (8)उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानꣳ सुतासः । यदीꣳ सबाधः पितरं न पुत्रास्समानदक्षा अवसे हवन्ते ॥** (सं. १-४-४६.)

दात्रे मह्यं **वसूनि** धनानि **ददातु** प्रजारूपमत्र धनं विवक्षितं 'प्रजाकामाय' इति वचनात् । **प्रजाकामाय मीढुषे रेतस्सेक्त्रे दुरोणे** । दुरोणमिति गृहनाम, इह तु 'न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते' इति न्यायेन भार्यायां वर्तते । योऽहं प्रजाकामो भूत्वा भार्यायां रेतस्सिञ्चामि तस्मै मह्यं प्रजां ददात्विति समुदायार्थः । **तस्मा** एव मह्यं **देवा** अपि **अमृताः** अमरणधर्माणः **संव्ययन्तां** व्ययतिर्दानकर्मणि, ददतु । देवा इति वचनं कतिपयेष्वेव पर्यवस्येत् तदर्थमाह—**विश्वे देवास इति** । **अदितिश्च सजोषाः** समानप्रीतिः ॥

[5]**यस्त्वा हृदेति** ॥ हे अग्ने! **जातवेदः! यः** अहं **मर्त्यः त्वा** त्वां **अमर्त्यं मन्यमानः** मरणधर्माणं माममरणधर्मा रक्षितुं समर्थ इति मन्यमानः **कीरिणा हृदा** कीरिरिति स्तोत्रनाम, स्तुतिपरेण मनसा **जोहवीमि** आह्वयामि । यच्छब्दश्रुतेः तच्छब्दोऽध्याहार्यः । तस्मिन् **अस्मासु**, वचनव्यत्ययः, तस्मिन्मयि **यशः** अन्नं कीर्तिं वा **धेहि** स्थापय । किञ्च—**प्रजाभिरमृतत्वं अश्यां** प्राप्नुयां 'प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम्'* इति श्रुतेः ॥

[6]**यस्मा इति** ॥ हे अग्ने! **जातवेदः! त्वं यस्मै सुकृते** पुरुषाय **स्योनं** सुखात्मकं **लोकं कृणवः** कुर्याः । उशब्दोऽनर्थकः । **सः अश्विनं** अश्वयुक्तं **पुत्रिणं** पुत्रैश्च युक्तं **वीरवन्तं** शूरैः परिचारकपुरुषैः पौत्रैर्वा युक्तम् । वीरशब्दः पौत्रवचनः पुत्रिणमित्युक्तत्वात् । **गोमन्तं** च **रयिं** धनं च **नशते** प्राप्नोति **स्वस्ति** यथा तथा ॥

---

*ब्रा. १-५-५.

[7]**त्वे सु पुत्रेति** ॥ हे **शवसः पुत्र**! शव इति बलनाम, तस्य पुत्र! बलातिशयप्रतिपादनपरं चैतत् । बलवतोपि तावत्पुत्रो बलवान्भवति, किंपुनर्बलस्यैव पुत्र इति । दृश्यते चान्यत्रापीदृशं इन्द्रस्याभिधानम् । तद्यथा 'ओजसो जातमुत मन्य एनम्'* इति । **त्वे** त्वयि **स्ववृत्रन्** । वृतेर्लुङि द्युतादित्वादङि 'बहुलं छन्दसि' इति रुटि रूपम् । सुष्ठु वर्तन्ते । काः? **कामकातयः** काम्यन्त इति कामाः तेषां कातयः कामनाः सर्वेषामेव कामानां कामनास्त्वयि वर्तन्ते । त्वमेव तेषां दातेत्यर्थः । अतश्च **न त्वामिन्द्रातिरिच्यते** त्वत्तोऽधिकः कश्चिदपि नास्तीत्यर्थः ॥

[8]**उक्थउक्थ इति** ॥ उक्थमिति शस्त्रनाम, शस्त्रेशस्त्रे प्रतिशस्त्रं **सोमः इन्द्रं ममाद** । लोडर्थे लिट्, अन्तर्भावितण्यर्थश्च मदिः । मादयतु **नीथेनीथे** नीतेनीते समाप्तेसमाप्ते । कीदृशमिन्द्रं? **मघवानं** मघमिति धननाम धनवन्तं **सुतासः** । एकस्मिन् बहुवचनम् । सुतः अस्माभिरभिपुतः सोमः । किं कारणमिन्द्रमेव मादयितुम्? **यत्** यस्मात् **ईं** । एनमित्यस्यार्थे छन्दस्ययं शब्दः प्रयुज्यते । एनमिन्द्रं **सबाधः** समानबाधाः **समानदक्षाः** समानबलाश्च **अवसे** आत्मनो रक्षणाय **हवन्ते** आह्वयन्ति **पितरं न** पितरमिव **पुत्राः** यस्मात्परस्परं बाधमानाः एनमेव हवन्ते तस्मात्सर्वेषां पितरमिन्द्रमेव मादयत्विति ॥

---

*ऋक्सं १०-७३-१०.

स्त्वां हृदा कीरिणेति चतस्रः । [9]भूर्भुवस्सुवो [10]राकामहं [11]यास्ते राके । [12]यौगन्धरिरेव नो राजेति

---

[9]सीमन्तोन्नयनमन्त्रेषु—व्याहृतयः ॥ गताः* ॥

[10]**राकामहमिति** ॥ पूर्णचन्द्रा पौर्णमासी **राका** तां **अहं** **सुहवां** स्वाह्वानाम् । **सुष्टुती** । तृतीयैकवचनस्य पूर्वसवर्णः । सुष्टुत्या शोभनया स्तुत्या **हुवे** आह्वयामि । सा च **शृणोतु** **नः** अस्माकम् । षष्ठीनिर्देशात् आह्वानमिति शेषः । **सुभगा** सौभाग्ययुक्ता श्रुत्वा च **बोधतु** **त्मना** आत्मना बुध्यतां हृदये करोत्वित्यर्थः । तदनन्तरं च **सीव्यत्वपः**, अप इति कर्मनाम, एतत्सीमन्तोन्नयनलक्षणं कर्म **सीव्यतु** छिद्रापिधानेन सुष्ठु करोतु **सूच्या** सूचीस्थानीयया स्वया† बुद्ध्या **अच्छिद्यमानया** क्वचिदप्यप्रतिहन्यमानया **ददातु** **वीरं**, पुत्रनामैतत्, पुत्रं **शतदायं** बहूनां दातारम् । 'अण् कर्मणि च' इति भविष्यति आकारान्तादण् प्रत्ययः । **उक्थ्यं** प्रशंसनीयम् ॥

---

(10)राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु नस्सुभगा बोधतु त्मना । सीव्यत्वपस्सूच्याऽच्छिद्यमानया ददातु वीरꣳ शतदायमुक्थ्यम् ॥

[11]यास्ते राके सुमतयस्सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳ सुभगे रराणा ॥(सं. ३-३-११.)

*१-११-१०. †सूचीस्वरूपया

साल्वीरवादिषुः । विवृत्तचक्रा आसीनास्तीरेण यमुने तव । [13]सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः । विवृत्तचक्रा आसीनास्तीरेणासौ तव । [14]पु-

---

[11]यास्त इति ॥ हे राके! सुपेशसः सुरूपायाः ते याः सुमतयः अनुग्रहात्मिका बुद्धयः याभिर्दाशुषे यजमानाय वसूनि ददासि, ताभिः सुमतिभिः नः अस्मान् सुमना भूत्वा उपागहि अद्यैवोपागच्छ । हे सुभगे! सहस्रपोषं बहुविधं पोषं रराणा ददती ॥

[12]यमुनातीरवासिनां वीणागानमन्त्रः—यौगन्धरिरिति ॥ साल्वो नाम जनपदः तद्विषयवासिन्यः प्रजाः साल्वीः साल्व्यः यौगन्धरिः युगन्धरस्यापत्यं यौगन्धरिः एष एव नो राजेत्यवादिषुः वदन्ति विवृत्तचक्राः विविधं वृत्तं चक्रं राष्ट्रं यासां ताः एवम्भूता भूत्वा हे यमुने! तव तीरेण तीरे आसीना इति ॥

[13]सर्वासां ब्राह्मणीनां प्रजानां वीणागानमन्त्रः—सोम एवेति ॥ ब्राह्मणीः ब्राह्मणजातीयाः प्रजाः सोम एव नो राजेत्याहुः। विवृत्तचक्रा इत्यादि । गतम् । असावित्यत्र नद्या नामनिर्देशः संबुद्ध्या यामुपजीवन्ति 'तीरेण कावेरि तव' इति ॥

[14]पुंसवने* दक्षिणे नासिकाछिद्रे न्यग्रोधशुङ्गारसमापिनयति—पुंसवन*मसीति ॥ पुमान् सूयते येन तत्पुंसवनं* तत्त्वमसि हे रस!॥

---

*सुवन.

ऽस्रवनं*मसि । [15]आभिष्ट्वाऽहं दशभिरभिमृशामि दशमास्याय सूतवे । [16]यथैव सोमः पवते यथा समुद्र एजति । एवं ते गर्भ एजतु सह जरायुणा निष्क्रम्य प्रतितिष्ठत्वायुषि ब्रह्मवर्चसि यशसि वीर्येऽन्नाद्ये । [17]दशमासांच शयानो धात्रा हि तथा कृतम् । ऐतु गर्भो अक्षतो जीवो जीवन्त्याः ।

---

[15]क्षिप्रंसवने* यजुषाऽभिमर्शनम्—आभिष्ट्वाऽहमिति ॥ स्त्रीलिङ्गनिर्देशाद्दशभिरिति लिङ्गाच्च अङ्गुळीभिरिति गम्यते । आभिः दशभिः अङ्गुळीभिः त्वां अहं अभिमृशामि दशमास्याय । द्वितीयार्थे चतुर्थी । दशमासान् भृतं गर्भं सूतवे क्षिप्रं सोतुम् ॥

[16]अवोक्षणमन्त्राः—यथैवेति ॥ यथैव येन प्रकारेण सोमः अभिषुतः पवते दशापवित्रेण स्रवति यथा समुद्रः वायुवशात् एजति कम्पते एवं ते गर्भ एजतु स्वस्थानाच्चलतु, चलित्वा च सह जरायुणा-गर्भवेष्टनेन बहिः निष्क्रम्य आयुरादिषु प्रतितिष्ठतु ॥

[17]दशेति ॥ दशमासान् शयानः अयं ते गर्भः अक्षतो भूत्वा जीवः जीवन्नेव जीवन्त्याः त्वत्तः ऐतु आगच्छतु । धात्रा हि तथा कृतमिति । दशमासशयनं हि धात्रा कृतं दैवेन निर्मितम्, अतो दश मासांश्च शयानः इति । शकारलोपोऽत्र द्रष्टव्यः॥

---

*सुवन.

[18]आयमनीर्यमयत गर्भमापो देवीस्सरस्वतीः । ऐतु गर्भो अक्षतो जीवो जीवन्त्याः । [19]तिलदेऽवपद्यस्व न माꣳसमसि नोदलम् । स्थवित्र्यवपद्यस्व न माꣳसेषु न स्नावसु न बद्धमसि मज्जसु । [20]निरैतु पृश्नि शेवलꣳ शुने जराय्वत्तवे ।

---

[18]आयमनीरिति ॥ आङ्पूर्वो यमिराकर्षणार्थे वर्तते । 'आयंस्त पादम्' इति यथा । आयमनीः! आयमन्यः! गर्भस्याकर्षिण्यो यूयं यमयत । अत्राप्याङ्लोपो द्रष्टव्यः । आयमयत आकर्षयत गर्भं, हे आपो! देवीः! देव्यः! सरस्वतीः! सरस्वत्यादिषु नदीषु भवा यूयम् । ऐतु गर्भः गतम् ॥

[19]जरायुणाऽवाक्पतने यजुर्भ्या*मवोक्षणं—तिलदे इति ॥ जरायुनामैतत् । हे तिलदे! अवपद्यस्व अवाक्पत, न हि त्वं मांसमसि नोदलं नाप्युदरम् । रलयोरविशेषः । स्थवित्री स्थूलभूता अविकलैव अवपद्यस्व न मांसेषु बद्धमसि बद्धाऽसि, न स्नावसु नापि सिरासु बद्धाऽसि नापि मज्जसु अस्थिगतस्सारो मज्जा । मांसादिष्वेकदेशेनापि लग्ना मा भूदित्यर्थः ॥

[20]निरैत्विति ॥ निरैतु निर्गच्छतु पृश्नि स्वल्परूपं† शेवलं शेवमिति सुखनाम, लो मत्वर्थीयः । सुखवद्यथा तथा निर्गच्छतु जरायु । किमर्थं? शुने अत्तवे शुनो भक्षणाय ॥

---

*जरायु न पततेत्ततो ऋग्यजुर्भ्यां. †स्थूलस्वरूपं.

[21–31]दिवस्परीत्येषोऽनुवाकः । [32]अस्मिन्नहꣳ सहस्रं

[21]अथ जातकर्म । जातं कुमारमभिमृशति दिवस्परीत्यनुवाकेन वात्सप्रेण वत्सप्रऋषिणा दृष्टेन—**दिवस्परीति** ॥ परिशब्दः पञ्चम्यर्थानुवादी । अयं **जातवेदाः अग्निः प्रथमं दिवो जज्ञे** आदित्यात्मना वैद्युतात्मना वा । **अस्मत्परि** अस्मत्तः **द्वितीयं** जज्ञे यजमानादग्निर्जायते ? । ‘ते मत्प्रातः प्रजनिष्येथे । ते मा प्रजाते प्रजनयिष्यथः’* इति दर्शनात् । **अप्सु तृतीयं** जज्ञे बाडबरूपेण । कीदृशः ? **नृमणाः** नृषु मनो यस्य अनुग्राहकत्वेन स नृमणाः । **एनं** एवंभूतमग्निं **स्वाधीः** स्वाध्यानः पुरुषः **अजस्रमिन्धानः** भूत्वा **जरते** स्तौति, दुर्बुद्धिस्तु न तथा ॥

[22]**विद्मा त इति** ॥ हे **अग्ने** ! **ते** तव स्वभूतानि **त्रेधा** त्रिषु स्थानेषु पृथिव्यामन्तरिक्षे दिवि च स्थितानि **त्रयाणि** त्रीणि रूपाणि अग्निवाय्वादित्याख्यानि **विद्म** जानीमः । तथा **ते सद्म** सद्मानि स्थानानि **विभृतं** विभृतानि । ‘हृग्रहोर्भः’ इति छन्दसि भः । विहृतानि **पुरुत्रा** बहुधा बहूनि गार्हपत्याहवनीयादीनि **विद्म** । तथा **ते** नाम **परमं** प्रकृष्टं **गुहा** गूढं अविज्ञातं अवेदविद्भिः यदेवम्भूतं तव

[21]दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ [22]विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा । विद्मा ते नाम

*ब्रा. १-२-१.

नाम तदपि वयं **विद्म** । तथा **यतः** त्वं **आजगन्थ** आगतवानसि **तमप्युत्सं विद्म**। उत्सः प्रस्रवणं स चापामुत्पत्तिस्थानमिति तेनोत्पत्तिस्थानमात्रं लक्ष्यते ॥

[23]**समुद्रे त्वेति**॥ हे **अग्ने! समुद्रे अप्स्वन्तः** बडवात्मना स्थितं त्वा त्वां **नृमणाः** नृषु अनुग्राहकत्वेन आसक्तमनाः बरुणः ईधे दीपयति। तथा **दिवः** द्युलोकस्य **ऊधन्** ऊधस्थानीये मेघे आदित्यमण्डले वा **नृचक्षाः** नृणां **द्रष्टा** कृताकृतप्रत्यवेक्षणेन । कः पुनरसौ? सूर्यः, स हि कर्मसाक्षी, स च त्वामीधे । तथा **तृतीये रजसि** द्युलोके* कीदृशे? **ऋतस्य** उदकस्य सत्यस्य वा **योनौ** उत्पत्तिस्थाने अन्तरिक्षे वैद्युतात्मना **तस्थिवांसं त्वां महिपाः** महान्तः **अहिन्वन्** । हि गतौ, गत्यर्थाः बुद्ध्यर्थाः । बुध्यन्ते । वर्तमाने लङ् ॥

[24]दावाग्निस्स्तूयते—**अक्रन्ददिति** ॥ **अक्रन्दत्** क्रन्दति अग्निः दावरूपः **स्तनयन्निव** पर्जन्य इव **द्यौः**। सप्तम्यर्थे प्रथमा। दिवि व्योम्नि **क्षाम** क्षामेति पृथिवीनाम। पदकाले छान्दसं ह्रस्वत्वम् । द्वितीयार्थं चैतल्लुप्तविभक्तिकम् । क्षामां **रेरिहत्** आस्वादयन् अटवी-

---

**परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थं ॥ [23]समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन्ं । तृतीये त्वा रजसि तस्थिवाꣳसमृतस्य योनौ महिषा अहिन्वन् ॥ [24]अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् । सद्यो**

---

*लोके.

स्थलं दहन्नित्यर्थः । **वीरुधः** गुल्मान् **समञ्जन्** सम्यग्गच्छन् भक्षणार्थं भक्षयन्नित्येव वाऽर्थः । किञ्च—**जज्ञानः** जातोऽयमटव्यां सद्यः तदैव **इद्धः** दीप्तः **व्यख्यत्** । व्यत्ययेनायं कर्मणि कर्तृप्रत्ययः । विख्यायते विशेषेण दृश्यते दूरस्थैरपि **हि** । ईमिति पादपूरणे । तथा **रोदसी अन्तः** द्यावापृथिव्योर्मध्ये **भानुना** स्वया दीप्त्या **आभाति** समन्ताद्दीप्यते ॥

[25]**उशिगिति** ॥ वशेरिङ् **उशिक्** कामयिता, काम्यो वा **पावकः** शोधयिता **अरतिः** गन्ता **सुमेधाः** सुप्रज्ञः **मर्तेषु** मनुष्येषु, मनुष्यलोके वा **अग्निः अमृतः** अमरणधर्मा **निधायि** निहितः गार्हपत्यादिरूपेण । स च **इयर्ति** उच्छब्दो वक्ष्यमाणोऽपेक्ष्यते, **उदियर्ति** उद्गमयति **धूमं अरुषं**, महन्नामैतत्, महान्तं रोचनं वा* **भरिभ्रत्** किं? लोकम्, यो ह्ययं धूममुद्गमयति स मेघो भूत्वा वर्षति वर्षायत्ता च लोकस्य स्थितिः । **शुक्रेण** दीप्तेन **शोचिषा** तेजसा **द्यां** आकाशं **इनक्षत्** दीपयत्। लिङ्गव्यत्ययः । इनक्षन् । नक्षतिर्व्याप्तिकर्मा, इकार उपसर्जनः । व्याप्नुवन् ॥

[26]**विश्वस्येति** ॥ **विश्वस्य केतुः** सर्वस्य ज्ञाता **भुवनस्य**

---

**जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ [25]उशिक्पावको अरतिस्सुमेधा मर्तेष्वग्निरमृतो निधायि । इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत् ॥ [26]विश्वस्य केतुर्भुव-**

---

*अरोचनं वा.

भूतजातस्य **गर्भः** वैश्वानरात्मना । एवम्भूतोऽग्निः **जायमान** एव **रोदसी आऽपृणात्** आपूरयति स्वेन तेजसा । किञ्च—**वीडुं चित्** वीडुरिति दृढनाम, दृढमपि **अद्रिं** मेघं पर्वतं वा **अभिनत्** भिनत्ति **परायन्** परागच्छन् **यत्** यदा **अग्निं** एनं **पञ्च जनाः** निषादपञ्चमाश्चत्वारो वर्णाः **अयजन्त** यजन्ते तदा हविर्गृहीत्वा प्रतिगच्छन् पर्वतादिकमपि भित्त्वा गच्छतीत्यर्थः ॥

[27]**श्रीणामिति** ॥ **श्रीणां** सम्पदां **उदारः** उद्गमयिता दाता **धरुणो रयीणां** धारयिता धनानां **मनीषाणां** बुद्धीनां सदर्थविषयाणां **प्रार्पणः** प्रापयिता **सोमगोपाः** सोमस्य गोपयिता । **वसोः** । प्रथमार्थे षष्ठी । बह्वृचानां तु तथैव पाठः । वसुः प्रशस्तः **सूनुस्सहसः** । सह इति बलनाम । बलस्य पुत्रः प्रागाद्धि बलान्मथ्यमानोधिजायत इति । **अप्सु राजा** अप्सु दीप्यमानः वैद्युतात्मना बडबात्मना वा । **विभाति उषसामग्रे** इधानः अग्निहोत्रिभिरिध्यमानः ॥

[28]**यस्त** इति ॥ हे **देव! अग्ने! भद्र! शोचे!** कल्याणदीप्ते! **यो** मनुष्यः **ते** तुभ्यं **घृतवन्तं अपूपं** पुरोडाशं **अद्य कृणवत्**

---

**नस्य गर्भ आ रोदसी अपृणाज्जायमानः । वीडुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥ [27]श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणस्सोमगोपाः । वसोस्सूनुस्सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ [28]यस्ते अद्य कृणवद्भद्र**

कुर्यात् दद्यात् **तं देवभक्तं वस्यः** वसीयः श्रेयः **अच्छ** आ-मुं **प्रणय** प्रकर्षेण नय श्रेयः प्रापयेत्यर्थः । **द्युम्नं** धनं यशो वा तच्च **अभिप्रतरां** नय प्रकृष्टतरं नय हे **यविष्ठ!** युवतम! ॥

[29]**आ तमिति** ॥ हे अग्ने! तं अपूपस्य दातारं **आभज । सौश्रवसेषु** । श्रव इत्यन्ननाम । शोभनैश्चरुपुरोडाशादिभिर्युक्तेषु यागेषु **उक्थउक्थे** शस्त्रेशस्त्रे **शस्यमाने** प्रतिशस्त्रमित्यर्थः । **आभज** । स च त्वत्प्रसादात् **सूर्ये** सूर्यस्य **प्रियो भवाति** भवेत् । **प्रियो अग्ना** अग्नेश्च तव प्रियो भवेत् । किञ्च—**जातेन** । जातावेकवचनम् । जातैः पुत्रैः **उद्भिनदत्** उद्भिनत्तां प्रकाशताम् । **उज्जनित्वैः** जनिष्यमाणैश्च पुत्रैरुद्भिनदत् ॥

[30]**त्वामग्न इति** ॥ हे अग्ने! **त्वां अनुद्यून्** अनुदिनं **यजमानाः** पुरुषाः **विश्वा** विश्वानि **वार्याणि** वरणीयानि स्पृहणीयानि **वसूनि दधिरे** । धारणवृत्तेः दधातेर्वर्तमाने लिट् । धारयन्ति लभन्त इत्यर्थः । **त्वया सहेति** । अत्रेतिहासमाचक्षते—पुरा असुरा देवगवीरपहृत्य गिरिदुर्गे स्थापयित्वा द्वारमपिदधुः । त-

---

**शोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरां वस्यो अच्छाभि द्युम्नं देवभक्तं यविष्ठ ॥ [29]आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने । प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ [30]त्वामग्ने यजमाना अनु द्यून् विश्वा वसू-**

ज्ञात्वा अग्निमुखा देवाः अङ्गिरोभि बृहस्पतिना च सह गत्वा असुरानपजित्य गिरिदुर्गं भित्त्वा गाः प्रत्याजह्रुरिति । तदिदमत्रोच्यते—**त्वया सह द्रविणं** असुरैरपहृतं गोधनम**िच्छमानाः व्रजं** गोष्ठं **गोमन्तं** गोभिर्निबिडं **उशिजः** । मेधाविनामैतत् । मेधाविनोऽङ्गिरःप्रभृतयः **विवव्रुः** विवृतवन्तः विवृतद्वारं कृतवन्तः ॥

[31]**दृशान** इति ॥ **दृशानः** दूरस्थैरपि दृश्यमानः **रुक्मः** रोचनस्वभावः **उर्व्या** महत्या दीप्त्या **व्यद्यौत्** विद्योतते **दुर्मर्षं** दुरभिभवं यथा तथा व्यद्यौत् । **आयुः** । चतुर्थ्या लुक् । प्राणिनामायुषे **श्रिये** श्रियै च **रुचानः** दीप्यमानः । एवम्भूतः **अग्निरमृतः अभवत्** भवतु **वयोभिः** वयः अन्नं हविर्लक्षणैरन्नैः सह । **यत् यं एनं** अग्निं **अजनयद्द्यौः** वैद्युतरूपेण **सुरेताः** शोभनं वृष्टिलक्षणं रेतो यस्यास्सा द्यौः ॥

[32]उत्तरेण यजुषा कुमारमुपस्थ आदधाति—**अस्मिन्नहमिति**॥ **अस्मिन्** कुमारे अहं **सहस्रं** कामान् **पुष्यामि** पुष्येयं प्राप्नुयां **एधमानः** वर्धमानः **स्वे वशे** तिष्ठन् स्वतन्त्र इत्यर्थः ॥

---

**नि दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः ॥ [31]दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥**

(सं. ४-२-२.)

पुष्याम्येधमानस्स्वे वशे । [33]अङ्गादङ्गात्सं भवसि हृदयादधि जायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदश्शतम् ॥ ११ ॥

अन्नाद्ये जायस एकं च ॥ ११ ॥

[1]अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।

---

[33]अथाभिमन्त्रणम्—अङ्गादङ्गादिति ॥ स्त्रीसंयोगे बलवता प्रयत्नेन सर्वाङ्गीणं रेतो निषिच्यते । तदिदमुच्यते—अङ्गादङ्गात्सम्भवसीति । हृदयं कामस्याधिष्ठानं, तेन तस्य पुनर्वचनं—हृदयादधिजायसे । अधिः पञ्चम्यर्थानुवादी । एवम्भूतस्त्वं पुत्रनामा मम आत्मैवासि । वैशब्दः प्रसिद्धौ । स त्वं शरदश्शतं जीव ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने एकादशः खण्डः.

---

[1]मूर्धन्यवघ्राणं—अश्मा भवेति ॥ अश्मेव स्थिरो भव । परशुर्भव परशुरिव दुरासदो भव । अस्तृतं अनाच्छादितं मलेन हिरण्यं भव तद्रूपो भव । गावो वत्सलाः यादृशेन हिंकारेण वत्सान् अभिजिघ्रन्ति तेन पशूनां हिङ्कारेण त्वा त्वां अभिजिघ्रामि असौ नक्षत्रनामनिर्देशः संबुद्ध्या, 'कृत्तिक, रौहिण' इत्यादि॥

पशूनां त्वां हिंकारेणाभिजिंघ्राम्यसौ। [2]मेधां ते देवस्सविता मेधां देवी सरस्वती । मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजा । [3]त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु [4]त्वयि मेधां त्वयि प्रजां त्वयीन्द्र इन्द्रियं दधातु [5]त्वयि मेधां त्वयि प्रजां त्वयि सूर्यो भ्राजो दधातु । [6]क्षेत्रियै त्वा निरृत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे

---

[2]दक्षिणे कर्णे जपः—मेधां त इति ॥ मेधां ते देवः सविता आदधातु । तथा देवी सरस्वती । अश्विनौ च देवौ आधत्तां स्थापयतां पुष्करस्रजा पुष्करमालिनौ ॥

[3—5]त्वयि मेधामित्यादयः प्राशनमन्त्रा निगदसिद्धाः ॥ भ्राजः दीप्तिः ॥

[6]स्नापनमन्त्राः—क्षेत्रियै त्वेति ॥ क्षेत्री अचिकित्स्यो व्याधिः । पञ्चम्यथ चतुर्थी । क्षेत्र्याः रुजः अचिकित्स्यात् व्याधेः त्वां मुञ्चामि । तथा निरृत्यै निरृत्याः त्वा मुञ्चामि । रक्षःपिशाचादीनामधिष्ठात्री देवता निरृतिः । द्रुहः द्रोग्धुश्च पुरुषान्मुञ्चामि । तथा वरुणस्य पाशात् मुञ्चामि । एवं अनागसं

इमे । [7]शं ते अग्निस्सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः । शमन्तरिक्षꣳ सह वातेन ते शं ते चतस्रः प्रदिशो भवन्तु । [8]या दैवीश्चतस्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे । तासां त्वाऽऽजरस आ दधामि प्र यक्ष्म एतु निरृतिं पराचैः । [9]अमोचि

---

अपापं त्वां **ब्रह्मणे** वेदाय करोमि वेदयोग्यं करोमीत्यर्थः । उभे इमे द्यावापृथिव्यौ ते तव शिवे करोमि ॥

[7]**शं त इति** ॥ अद्भिस्सहाग्निः ते शमस्तु शं करोतु । ओषधीभिस्सह द्यावापृथिवी शं स्ताम् । अन्तरिक्षं च वातेन सह ते शमस्तु । चतस्रश्च प्रधाना दिशः ते शं भवन्तु ॥

[8]**या इति** ॥ इन्द्रादीनां देवानां सम्बन्धिनीः **दैवीः** याश्चतस्रः प्रधाना **दिशः वातपत्नीः** वातः पतिः पालयिता यासां **सूर्योऽभिविचष्टे** अभिविपश्यति, **तासां** दिशां **आ जरसः** यावता जीर्यन्ति तावन्तं कालं **त्वा आदधामि** स्थापयामि । एवं स्थापितात् त्वत्तः **यक्ष्मः** रोगः **निरृतिं प्रैतु** तामेव प्रतिगच्छतु **पराचैः** पराङ्मुखः ॥

[9]**अमोचीति** ॥ अयं कुमारः यक्ष्मात् **दुरिताच्चामोचि** । तथा **अवर्त्यै** अवर्त्याः पापात् आपत्तः । तथा **द्रुहः** पाशाच्च निरृत्याश्च उदमोचि । **अहाः** अहासीत् **अवर्ति** नृ-

**यक्ष्मा॑द्दुरि॒ताद॑व॒र्त्यै द्रु॒हः पाशा॑न्निरृ॒त्यै चोद॑मोचि। अहा॑ अव॑र्ति॒मवि॑दथ्स्यो॒नमप्य॑भूद्भ॒द्रे सु॑कृ॒तस्य॑ लो॒के। [10]सूर्य॑मृ॒तं तम॑सो॒ ग्राह्या॒ यद्दे॒वा अमु॑ञ्च॒न्नसृ॑ज॒न्व्येन॑सः। ए॒वम॒हमि॒मं क्षे॑त्रि॒याज्जा॑मिश॒ꣳसाद्द्रु॒हो**

त्यभावः अवर्तिः दारिद्यम्। **अविदत्** लब्धवान् **स्योनं** सुखम्। अपि च **भद्रे सुकृतस्य** पुण्यस्य **लोके** च **अभूत्**। य एवं मया स्नाप्यते स प्राप्त एव पुण्यलोकमिति भूतनिर्देशः॥

[10]**सूर्यमिति** ॥ **सूर्यं** देवं **ऋतं** प्राप्तं कैः? वक्ष्यमाणैस्तमआदिभिः। **तमसस्सकाशात् ग्राह्याः** ग्राहिः ग्रहणीरोगः 'ग्राहिर्जग्राह यदि वैतदेनम्'* इति दर्शनात्। तस्याश्च **देवाः यत्** यथा **अमुञ्चन् एनसश्च व्यसृजन्** तमेव सूर्यम्। तथा च ब्राह्मणम्—'सुवर्भानुरासुरस्सूर्यं तमसा विध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्'† इति। **एवमहमिमं** कुमारं **क्षेत्रियात् जामिशंसात्** जामीनामभिशापात्—

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः।
तानि कृत्या हतानीव विनश्यन्ति समन्ततः॥‡

इत्येवं निन्दितात् **द्रुहो** द्रुहश्च पुरुषात् **वरुणस्य पाशान्मुञ्चामि**। सर्वत्र मुचिरन्तर्भावितण्यर्थः॥

*ऋक्सं. १०-१६१-१. †सं. २-१-२. ‡मनु. ३-५८.

मुञ्चामि वरुणस्य पाशात् । [11]भूस्स्वाहा भुवस्स्वाहा सुवस्स्वाहोꣳ स्वाहा ॥ १२ ॥

विचृत्ये षट् ॥ १२ ॥

[1]मा ते कुमारꣳ रक्षो वधीन्मा धेनुरत्यासारिणी । प्रिया धनस्य भूया एधमाना स्वे गृहे । [2]अयं कुमारो जरां धयतु दीर्घमायुः । यस्मै* त्वꣳ

---

[11]ओंकारचतुर्थीभिः व्याहृतीभिः पृषदाज्यप्राशनम्—भूस्स्वाहेति॥ गताः† ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने द्वादशः खण्डः.

---

[1]मातुरुपस्थे कुमारमादधाति—मा ते कुमारमिति ॥ ते तव कुमारं रक्षो मा वधीत् मा च धेनुः अत्यासारिणी वत्सस्नेहेन अत्यन्तं धावन्ती ‡। धेनुग्रहणं तादृशानामुपलक्षणम् । प्रिया धनस्य पुत्ररूपस्य गवादेर्वा भूयाः एधमाना स्वे गृहे मम स्वभूते गृहे ॥

[2]स्तनं धापयति—अयमिति ॥ अयं कुमारः जरां दीर्घं चायुः स्तनव्याजेन धयतु पिबतु स्तन्यं पिबन् आजरसं जीवत्वि-

---

*तस्मै. †१-१०-१०. ‡अन्यानतीत्य धावन्ती.

स्तन प्रप्यायायुर्वर्चो यशो बलम् । [3]यद्भूमेर् हृदयं दिवि चन्द्रमसि श्रितम् । तदुर्वि पश्यं माऽहं पौत्रमघꣳ रुदम् । [4]यत्ते सुसीमे हृदयं वेदाहं तत्प्रजापतौ । वेदाम तस्य ते वयं माऽहं पौत्रमघꣳ

त्यर्थः । यस्यै* त्वं हे स्तन! प्रप्याय प्रक्षर । किं? आयुर्वर्चो यशो बलं च क्षीरव्याजेन आयुरादि प्रक्षरेत्यर्थः ॥

[3]उत्तराभ्यां पृथिवीमभिमृशति—यद्भूमेरिति ॥ यत् भूमेः तव स्वभूतं हृदयं दिवि आकाशे चन्द्रमसि श्रितं स्थितं कलङ्कत्वेन। भूच्छाया हि चन्द्रमसः कलङ्कः । हे उर्वि! तत्पश्यं पश्येयं, अहं पौत्रं पुत्रनिमित्तं अघं व्यसनमुद्दिश्य मा रुदं त्वदभिमर्शनात् चक्षुष्मान् भूयासं पुत्रं चोद्दिश्य मा रुदमित्यर्थः ॥

[4]यत्त इति ॥ हे सुसीमे! शोभनसीमे! यत्ते हृदयं तदहं प्रजापतौ ओषधिजननद्वारेण प्रजानां पालयितरि चन्द्रमसि स्थितं वेद पुनरपि तवाभिमर्शनात् ते तव स्वभूतस्य तस्य । द्वितीयार्थे षष्ठी। तव स्वभूतं तद्धृदयं वयं वेदाम । 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम्, प्रार्थने च लोट् । चिरकालमहं वेदानि। माऽहं पौत्रमित्यादि । गतम् ॥

[5]संविष्टं कुमारमभिमृशति—नामयतीति ॥ यत्र भूप्रदेशे वयं वदामसि मन्त्रमुच्चारयामः, यत्र चाभिमृशामसि अभिमर्शनं कुर्मः,

*तस्मै.

रुदम् । [5]नामयति न रुदति यत्र वयं वदामो यत्र चाभिमृशामसि । [6]आपस्सुप्तेषु जाग्रत रक्षाꣳसि निरितो नुदध्वम् । [7]अयं कलिं पतयन्तꣳ श्वानमिवोद्वृद्धम् । अजां वाशितामिव मरुतः पर्याध्वꣳ स्वाहा । [8]शण्डेरथश्शाण्डिकेर उलूखलः ।

---

तत्र संविष्टोऽयं कुमारः **नामयति** न व्याधितो भवति, न रुद्-ति । लोडर्थे लट् । नामयतु न रुदत्विति ॥

[6]शिरस्त उदकुम्भं निदधाति—**आपस्सुप्तेष्विति** ॥ हे **आपः**! यूयं **सुप्तेषु** अस्मासु **जाग्रत** प्रबुद्धा भवत । जागरित्वा च **रक्षांसि इतः** प्रदेशात् **निर्णुदध्वम्** । 'आपो वै रक्षोघ्नीः'* इति दर्शनात् ॥

[7]सर्षपान् फलीकरणमिश्रान् जुहोति—**अयमिति** ॥ द्वितीयार्थे प्रथमा । इमं **कलिं** कलिर्भूतविशेषः, येनाधिष्ठितं चतुर्थं युग-मश्लीलं भवति । 'कलये सभास्थाणुम्'† इति दर्शनात् । तं कलिं **पतयन्तं** कुमारं प्रति गच्छन्तं उद्वृद्धं उत्कटं चिभक्षयिषुं **श्वानमिव** हे **मरुतः**! **पर्याध्वम्** । अस्यतेरेतद्रूपं, न पुनरासेः । पर्यास्यध्वम् । **अजां वाशितामिव** । वाशृ शब्दे । यथा बहुकृत्वो वाश्यमानामजामन्यतो निरस्यति तद्वत् ॥

[8]**शण्डेरथ इति** ॥ शण्डश्च मर्कश्चासुरौ यत्रेदं भवति—'निर-

---

*सं. २-६-४. †ब्रा. ३-४-१६.

च्यवनो नश्यतादितस्स्वाहा । [9]अयश्शण्डो मर्क उपवीरं उलूखलः । च्यवनो नश्यतादितस्स्वाहा । [10]केशिनीश्श्वलोमिनीः खजापोऽजोपकाशिनीः । अपेत नश्यतादितस्स्वाहा । [11]मिश्रवाससः कौबेर-

स्तश्शण्डः, निरस्तो मर्कः'* इति । शण्डस्य रथः,† शण्डो वा रथो यस्य स **शण्डेरथः** ततोपि प्रबलः कश्चित् । शण्डनेतृकं बलं शाण्डिकं, तदीरयतीति **शण्डिकेरः** सोपि कश्चित् । उरुश्च भवति खलश्च भवतीत्युलूखलः तदाभरणो वा,‡ सोऽपि कश्चित् । गर्भादेश्चावयिता **च्यवनः** । एते चत्वारः असुरविशेषा **नश्यतात्** इतः प्रदेशात् अपसर्पन्तु ॥

[9]**अय इति ॥ अयः** अयोमुखः । यमवेक्ष्य अन्ये वीरा न्यूना भवन्ति स **उपवीरः** । अन्ये व्याख्याताः । एते षट् ॥

[10]**केशिनीरिति** ॥ केशिन्यादयः पिशाच्यः । **केशिनीः** । एकवचनं बहुवचनं वा, निन्दायां मत्वर्थीयः । निन्दितकेशा इत्यर्थः । शुन इव लोमानि यासां ताः **श्वलोमिन्यः** । खंजा§ भूत्वा या आप्नुवन्ति ताः **खजापः** । अजा इव या उपकाशन्ते ताः **अजोपकाशिन्यः** । या एवम्भूताः पिशाच्यः ता यूयं इतः प्रदेशात् **अपेत** अपसर्पत । अपेत्य च **नश्यतात्** । नश्यतादिति बहुवचनस्य तादादेशः ॥

*ब्रा. १-१-१. †शण्डस्यैरणः, ‡तदाहरणो वा. §खंजना.

का रक्षोराजेन प्रेषिताः । ग्रामꣳ सजानयो गच्छ-न्तीच्छन्तोऽपरिदाकृतान्थ्स्वाहा।[12] एतान्घ्नतैतान्गृह्णी-तेत्ययं ब्रह्मणस्पुत्रः । तानग्निः पर्यसरत्तानिन्द्रस्ता-न्बृहस्पतिः । तानहं वेद ब्राह्मणः प्रमृशतः कूटद-

[11]मिश्रेति ॥ मिश्रवाससः अन्योन्यम्* । कौबेरकाः कु-बेरस्य भृत्याः कौबेराः ते कुत्सिताः कौबेरकाः तेनैव कुबेरेण रक्षोराजेन प्रेषिताः सजानयः सभार्याः ग्रामं गच्छन्ति इच्छन्तः अपरिदाकृतान् 'अग्नये त्वा परि ददामि '† इत्येवमा-दिभिः मन्त्रैः देवताभ्यो रक्षणार्थं दत्ताः परिदाकृताः उपनीताः ततोऽन्येऽपरिदाकृताः बालाः तानिच्छन्तः एतान् ॥

[12]अर्थ सङ्गतेरुत्तरार्धे व्याख्या आरभ्यते‡—तानिति ॥ तान् पूर्वो-क्तान् पिशाचान् अग्निः पर्यसरत् परिधावतु । कीदृशः ? ब्रह्मणस्फुत्रः 'अग्ने महाꣳ असीत्याह महान् ह्येष य-दग्निर्ब्राह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्यं भरति ' § इति ब्राह्मणम् । अयमग्निः तान्परिधावतु । किं कुर्वन् ? एतान् पिशाचान् घ्नत एतान् गृह्णीतेति वदन् । तान् इन्द्रः तान् बृहस्पतिः पर्यसरदित्येव तान् पिशाचान् अहमपि वेद वेद्मि ब्राह्मणः प्रमृशतः बालान् इतश्चेतश्च मार्ग-तः कूटदन्तान् कूटवदुन्नतदन्तान् विकेशान् विकीर्णकेशान् लम्ब-

*अन्ये. †२,३,१३-२३. ‡अर्थसंगतिरुत्तरार्धव्याख्यातो लभ्यते.
§सं. २-५-९.

न्तान् विकेशाल्लम्बनस्तनान्थ्स्वाहा ॥ १२ ॥

निरितो नुदध्वꣳ स्वाहा त्रीणि च ॥ १३ ॥

[1]नक्तंचारिणं उरस्पेशाञ्छूलहस्तान्कपालपान्। पूर्व एषां पितेत्युच्चैश्श्राव्यकर्णकः । माता जघन्या सर्पति ग्रामे विधुरमिच्छन्ती स्वाहा । [2]निशीथचा-

---

नस्तनान् पिशाचत्वादेव पुंसामपि लम्बनस्तनत्वमविरुद्धम् । पिशाचीनामेव* ग्रहरूपेण विवक्षितत्वात् पुल्लिङ्गनिर्देशः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने त्रयोदशः खण्डः.

---

[1]नक्तंचारिण इति ॥ नक्तंचारिणः रात्रिंचरान् उरस्पेशान् उरस्युज्ज्वलान् शूलहस्तान् कपालपान् एतान्यपि 'ता नग्निः' इत्यत्र तानिति निर्दिष्टानामेव विशेषणानि । एषां पिशाचानां पिता पूर्व एति पुरो गच्छति । छान्दसं पररूपम् । किं कृत्वा? उच्चैश्श्राव्य इमं भक्षयितुमागच्छतेत्येवं पुत्राणां श्रावयित्वा कर्णक इति तस्याभिधानम् । अथवा—अकर्णकः कर्णरहितस्सन्नपि उच्चैश्श्रावी उच्चैश्श्रोता । तेषां माता जघन्या सर्पति पृष्ठतो गच्छति ग्रामे विधुरं व्याधितं दुर्बलं बालं इच्छन्ती ॥

---

*पिशाचानामेव.

रिणी स्वसा सन्धिना प्रेक्षते कुलम् । या स्वपन्तं बोधयति यस्यै विजातायां मनः । तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् । अग्ने अक्षीणि निर्दह स्वाहा । [3]अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । वेदो वै पुत्रनामाऽसि स जीव शरदश्शतम् । [4]अश्मा भवेत्येषा* । [5—9]अग्निरायुष्मानिति पञ्च ।

---

[2]निशीथेति ॥ निशीथचारिणी स्वसा एषामेव सन्धिना कवाटाच्छिद्रेण प्रेक्षते कुलं अन्तःस्थितं जनसमुदायम् । या चान्या स्वपन्तं बोधयति यस्यै यस्याश्च विजातायां प्रसूतायां अस्यां मद्भार्यायां मनः बाधिष्ये इति, तासां त्वं हे कृष्णवर्त्मने! कृष्णवर्त्मन्! क्लोमानं हृदयं यकृत् क्लोमादयोऽन्तर्गतमांसविशेषाः । हे अग्ने! तान् अक्षीणि च निर्दह निश्शेषं दह ॥

[3]प्रवासादेत्य पुत्रस्याभिमन्त्रणम्—अङ्गादङ्गादिति ॥ गतम्†। वेदोसि धनमसि । वेदः विद्वान् ‡ धर्मसाधनमसि ॥

[4]मूर्धन्यवघ्राणम्—अश्मा भवेति ॥ गतम् *॥

---

(5)अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥

*अयं मन्त्रः (१३७-१३८) पत्रयोर्लिखितः. †२-११-१३. ‡वेदवद्वा.

[10]सर्वस्मादात्मनस्संभूताऽसि सा जीव शरदश्शतम्।

[5—9]दक्षिणे कर्णे जापः—अग्निरायुष्मानिति ॥ पञ्च पर्यायाः। अग्नेः वनस्पतिभिरायुष्मत्त्वं तदन्नत्वात्। सोमस्य ओषधीभिरायुष्मत्त्वं ओषधिरसरूपामृतात्मकत्वात्। 'मृतो यज्ञस्त्वदक्षिणः' इति वचनात्। यज्ञस्य दक्षिणाभिरायुष्मत्त्वम्। ब्रह्म वेदः। ब्राह्मणास्तस्य धारयितारः। तेन तैस्तस्यायुष्मत्त्वम्। देवानाममृतेन आयुष्मत्त्वं प्रसिद्धम्। तेन त्वेत्यादि सर्वत्रानुषज्यते। शिष्टं स्पष्टम्॥

[10]कुमार्या अभिमन्त्रणम्—सर्वस्मादिति ॥ सर्वस्मादात्मनः अङ्गादङ्गादित्यर्थः। शिष्टं स्पष्टम्॥

(6)सोम आयुष्मान्त्स ओषधीभिरायुष्मान्तेन
त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥

(7)यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान्तेन
त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥

(8)ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥

(9)देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ (सं. २-३-१०.)

[11]भूरपां त्वौषधीनाꣳ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वसौ । [12]भुवोऽपाꣳ [13]सुवरपां [14]भूर्भुवस्सुवरपां त्वौषधीनाꣳ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वसौ । [15]उष्णेन वायवुदकेनेत्येषः* ॥ १४ ॥

एषा चत्वारि च ॥ १४ ॥

---

[11—14]अन्नप्राशनमन्त्राः—भूरपामिति ॥ व्याहृतयः उच्चारणमात्रेणोपकारकाः । अपामोषधीनां च रसं त्वा त्वां प्राशयामि ता आप ओषधयश्च ते शिवास्सन्तु । अनमीवाः अरोगा आरोग्यहेतवश्च ते सन्तु असौ यज्ञशर्मन् ! । उत्तरेषु व्याहृतिमात्रं भिद्यते । अन्यत्समानम् ॥

[15]उष्णेन वायाविति ॥ एषोऽनुवाको गतः * ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने चतुर्दशः खण्डः.

---

* अयमनुवाकः (७८-८१) पत्रेषु लिखितः.

[1]यद्भूमेः क्रूरं तदितो हरामि पराचीं निरृतिं निर्वाहयामि । इदꣳ श्रेयोऽवसानमागन्म देवा गोमदश्वावदिदमस्तु प्र भूमं । [2]स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नश्शर्म सप्रथाः । [3]इहैव तिष्ठ निमिता तिल्वला स्यादिरावती । मध्ये

---

[1]गृहनिर्माणे पालाशेनोदूहेनोदूहति—यद्भूमेरिति ॥ यत् अस्याः भूमेः क्रूरं अस्थिकण्टकादि तत् इतः अस्मात्प्रदेशात् हरामि अपनयामि । या चात्र निरृतिः अलक्ष्मीः स्थिता तां निरृतिमपि पराचीं पराङ्मुखीं निर्वाहयामि निर्वासयामि । इदं श्रेयः प्रशस्ततरं अवसानं स्थानं आगन्म आगतवन्तो वयं हे देवाः!। वास्तुदेवताः! युष्माकं प्रसादात् इदं वास्तु गोमत् अश्वावत् अश्ववत् भूम भूतियुक्तं च प्रास्तु प्रकर्षेण भवतु ॥

[2]उत्तरयाऽभिमृशति—स्योनेति ॥ हे पृथिवि! त्वं स्योना सुखरूपा सुखस्पर्शा वा भव अनृक्षरा कण्टकादिरहिता निवेशनी निवेशनयोग्या यच्छ देहि नः अस्मभ्यं शर्म सुखं सप्रथाः सर्वतः प्रथिता त्वम् ॥

[3]स्थूणावधानमन्त्रौ—इहैवेति ॥ हे स्थूणे! इहैव द्वारदेशे तिष्ठ निमिता निखाता अस्माभिः तिल्वला तक्षकृतैः तिलकैः तद्वती स्यात् । पुरुषव्यत्ययश्छान्दसः । स्याः इरावती अन्नवती अ-

**तात्प्यस्य तिष्ठान्मा त्वा प्रापन्नघायवः । [4]आ त्वा कुमारस्तरुण आ वत्सो जगता सह । आ त्वा परिस्रुतः कुम्भा आ दध्नः कलशीरयन् । [5]ऋतेन स्थूणावधिरोह वंशोग्रो विराजन्नपसेध शत्रून् । [6]ब्रह्म च ते क्षत्रं च पूर्वे स्थूणे अभि रक्षतु । [7]य-**

---

स्माकं अन्नहेतुः स्या इत्यर्थः । **मध्ये तात्प्यस्य** तल्पशब्देन गृहं लक्ष्यते, तस्येदं तात्प्यं द्वारं तस्य मध्ये **तिष्ठात्** । अत्रापि पुरुषव्यत्ययः । तिष्ठाः तिष्ठेः । अत्र स्थितां **त्वा** त्वां **अघायवः** परेषामनर्थकामाः **मा प्रापन्** मा प्राप्नुवन्तु ॥

[4]**आ त्वेति** ॥ अयन्निति बहुवचनान्तं कुमारादिभिर्विपरिणामेन संबध्यते । **कुमारस्त्वां** आयातु गृहे क्रीडन्नागच्छतु अवलम्ब्यस्थानार्थम् । एवं **तरुणः** युवा, एवं **वत्सः** कुमारादपि बालः **जगता** गतिमता वत्सात् किंचिदधिकेन **सह** । **परिस्रुतः** परिस्रुत् सुरा, इह तु घृतं परिस्रवणयोगात् तस्य **कुम्भाश्च त्वां आऽयन्** आगच्छन्तु । **दध्नश्च कलशीः** कलश्यः **आऽयन्** मन्थनार्थमायन् । एतेः पञ्चमे लकारे रूपम्, छान्दसो गुणः ॥

[5]वंशमाधीयमानमनुमन्त्रयते—**ऋतेनेति** ॥ **ऋतेन** सत्येन **स्थूणौ** । छान्दसो लिङ्गव्यत्ययः, द्विवचनं चाविवक्षितम् । यथासम्भवं स्थूणाः **अधिरोह** हे **वंश** ! अधिरुह्य च **उग्रः** अनभिभूतो भूत्वा **विराजन्** दीप्यमानः **शत्रूनपसेध** प्रोत्सारय ॥

ज्ञश्च दक्षिणाश्च दाक्षिणे । [8]इषश्चोर्जश्चापरे [9]मित्रश्च वरुणश्चोत्तरे [10]धर्मस्ते स्थूणाराज [11]श्रीस्ते स्तूपः । [12]उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वाꣳश्चकार । अह्ना यदेनः कृतमस्ति पापꣳ रात्र्या यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो

---

[6—11]सम्मितमुत्तरैर्यथालिङ्गमभिमन्त्रयते—**ब्रह्म चेति** ॥ **ब्रह्म** ब्राह्मणजातिः **क्षत्रं** क्षत्रियजातिः **ते** तव स्वभूते **पूर्वे** स्थूणे अभिरक्षतु हे गृह ! **यज्ञश्च दक्षिणाश्च दाक्षिणे** स्थूणे अभिरक्षतु । **इषश्च ऊर्जश्च अपरे** स्थूणे अभिरक्षतु । इषोर्जौ शारदौ मासौ । **मित्रश्च वरुणश्च उत्तरे** स्थूणे अभिरक्षतु । स्थूणे इति सर्वत्रानुषङ्गः । **धर्मः ते** तव **स्थूणाराजः** प्रधानस्थूणा । **श्रीः ते स्तूपः** पृष्ठवंशः ॥

[12]अग्निमुद्धरति—**उद्ध्रियमाण** इति ॥ मया **उद्ध्रियमाणः** त्वं हे अग्ने ! **मा** मां **पाप्मनः उद्धर** । **यत्** । लिङ्गव्यत्ययः । **यं** पाप्मानं अहं **अविद्वान्** अबुद्धिपूर्वं **यत्** यं **च विद्वान्** बुद्धिपूर्वं **चकार** कृतवानस्मि । तस्य पाप्मन एव विभज्य दर्शनं—**अह्ना** अह्नि **यदेनः** मया **कृतं अस्ति पापम्** । एन इत्युक्तत्वात् क्रियावाचकशब्दोऽयमेनसो विशेषणम् । [illegible] ओ वै शोषणे, शोषति कर्तारमिति । **रात्र्या** रात्रौ **यदेनः कृतमस्ति पापं** तस्मात्स**र्वस्मात् मां** मुञ्च **उद्धृतस्सन्** ॥

मुञ्च तस्मात् । [13]इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहꣳ सुमनसः प्रपद्ये । [14]अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै तयाऽनन्तं काममहं जयानि प्रजापतिर्यं प्रथमो जि-

[13]अगारं प्रपादयति—**इन्द्रस्येति** ॥ **इन्द्रस्य** ईश्वरस्य मम **गृहाः** । एकस्मिन् बहुवचनम् 'आपो दाराः' इतिवत् । **वसुमन्तः वरूथिनः** । वरूथमित्यपि गृहनाम, इह तु गृहावयवे द्रष्टव्यः । प्रशस्तैरवयवैः तद्वन्तः **तान्** गृहान् **सुमनसः** । वचनव्यत्ययः । सुमनाः **अहं प्रपद्ये** ॥

[14]अग्निं प्रतिष्ठापयति—**अमृताहुतिमिति** ॥ अमृतप्राप्तिनिमित्तभूतामाहुतिं **अग्निं अमृतायां पृथिव्यां जुहोमि** स्थापयामि **अमृतस्य** अमृतत्वस्य **जित्यै** जयाय । **तया** आहुत्या **अनन्तं कामं अहं जयानि** जयेयम् । **यं** कामं **प्रथमः प्रजापतिः** हिरण्यगर्भः **जिगाय** जितवान् । तस्मादिमं अग्निं अग्नौ पृथिव्यां 'इयं वा अग्निर्वैश्वानरः'* इति श्रुतेः । द्वितीयासप्तम्योः श्रुतेः जुहोमीत्यपेक्षते ॥

[15]व्रीहियवनिवपनमन्त्रः—**अन्नपत इति** ॥ हे **अन्नपते** ! **अन्नस्य** । कर्मणि षष्ठी । **अन्नं नः** अस्मभ्यं **देहि अनमीवस्य** अनमीवं आरोग्यकरं **शुष्मिणः** । शुष्म इति बलनाम । तद्यस्यास्ति कार्यत्वेन एवम्भूतमन्नं देहि । **प्रदातारं** च मां **प्रता-**

*ब्रा. ३-९-१७.

**गायाग्निमग्नौ स्वाहा । [15]अन्नपत इत्येषा । [16]अरिष्टा अस्माकं वीरास्सन्तु मा परासेचि मे धनम् । [17]भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ।**

---

**रिषः** प्रकर्षेण वर्धय । किञ्च—**नः** अस्माकं सम्बन्धिने **द्विपदे चतुष्पदे** च **ऊर्जं** अन्नं बलं वा **धेहि** देहि ॥

[16]उदधाने उदकुम्भानानयति—**अरिष्टा इति ॥ अस्माकं वीराः** पुत्राः **अरिष्टाः** अहिंसिताः **सन्तु । मे** मदीयं च **धनं मा परासेचि** व्यर्थं सिक्तं मा भूत् । सिच्यमानबिन्द्वभिप्रायमेतत् ॥

[17]दीर्णमुत्तरयाऽनुमन्त्रयते—**भूमिरिति ॥ भूमिः भूमिमगात्** भूमेर्विकारभूतं उदधानं स्वप्रकृतिमेव भूमिमगात् । **माता** अन्तरिक्षं उदधानगतमाकाशं **मातरं** बहिराकाशं **अप्यगात्** । अप्ययः प्रलयः । तत्रैव प्रलीना तेनैकीभूतेत्यर्थः । **पु[illegible] पशुभिश्च** वयं **भूयास्म** प्रभूताः स्याम । **यो नो द्वेष्टि स भिद्यतां**, नोदधानम् ॥

[18]होममन्त्राः—**वास्तोष्पत इति ॥ हे वास्तोष्पते** ! त्वं **अस्मान् प्रतिजानीहि** । प्रतिः धात्वर्थानुवादी । त्वद्भक्तानस्मान् जानीहि ।

---

**(15)अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥**

(सं. ४-२-३.)

[18—19]वास्तोष्पत॒ इति॒ द्वे । [20]वास्तोष्पते प्र॒तरणो न

---

ज्ञात्वा च स्वावेशः सूपसदनः अनमीवः आरोग्यकरश्च भव नः अस्माकम् । किञ्च—यत् त्वा वयं ईमहे याचामहे तत् नः अस्मान् प्रतिजुषस्व प्रापय । नः अस्माकं सम्बन्धिने द्विपदे चतुष्पदे च शं एधि सुखकरो भव ॥

[19]वास्तोष्पत इति ॥ हे वास्तोष्पते ! शग्मया । शग्मामिति सुखनाम । सुखरूपया रण्वया रममाणया गातुमत्या गतिमत्या सन्मार्गगामिन्या एवम्भूतया ते संसदा परिषदा वयमपि सक्षीमहि । षच समवाये । समवेतास्स्याम तदन्तर्भवेमेत्यर्थः । लब्धस्य रक्षणं क्षेमः । अलब्धस्य लाभो योगः । तृतीयार्थे सप्तमी । क्षेमेण योगेन च नः अस्मान् आवः । लोडर्थे लङ् । वरं । क्रियाविशेषणमेतत् । वरिष्ठं यथा भवति तथा आवः । उतशब्दोऽप्यर्थे । चतुर्थः पादः देवताभेदात् भिन्नं वाक्यम् । हे विश्वेदेवाः ! यूयं स्वस्तिभिः सदा नः अस्मान् पात रक्षत ॥

---

(18)वास्तोष्पते॒ प्रति॑ जानीह्यस्मान्त्स्वावे॒शो अ॑नमी॒वो भ॑वा नः । यत्त्वेम॑हे॒ प्रति॒ तन्नो॑ जुषस्व॒ शं॑ न॑ एधि द्वि॒पदे॒ शं॑ चतु॑ष्पदे ॥

(19)वास्तो॑ष्पते श॒ग्मया॑ स॒ꣳसदा॑ ते सक्षी॒महि॑ र॒ण्वया॑ गातु॒मत्या॑ । आव॒ः क्षेम॑ उ॒त योगे॒ वरं॑ नो॑ यूयं पा॑त स्व॒स्तिभि॒स्सदा॑ नः ॥ (सं. ३-४-१०.)

एधि गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व । [21]अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः । [22]शिवꣳ शिवम् ॥ १५ ॥

अभि रक्षतु भियताꣳ षट् ॥ १५ ॥

---

[20]**वास्तोष्पत** इति ॥ हे **वास्तोष्पते** ! **नः** अस्माकं **प्रतरणः** प्रतारयिता वर्धयिता **एधि** भव **गोभिः अश्वेभिः** अश्वैश्च **इन्दो** ! इन्दिरैश्वर्यकर्मा, ईश्वर !, उदेर्वा क्लेदकर्मणः वृष्टिद्वारेण क्लेदयितः ! । किञ्च—**ते सख्ये** स्तुत्यस्तोतृभावलक्षणे वयं **अजरासः स्याम** अजर्यं नौ सङ्गतमस्त्वित्यर्थः । किं बहुना—**पितेव** यथा पिता **पुत्रान्** प्रति जुषते प्रीणयति तथा **नः प्रतिजुषस्व** ॥

[21]**वास्तोष्पत** इति ॥ हे **वास्तोष्पते** ! **अमीवहा** व्याधीनां हन्ता त्वं **विश्वा** विश्वानि **रूपाणि आविशन्** प्रविशन् व्याधिशमने यानि रूपाण्युपयुक्तानि भिषग्भेषजादीनां तानि रूपाणि प्रविश्य अमीवहा । एवम्भूतः त्वं **नः** अस्माकं **सखासु** सखिषु **शेवः** वरिष्ठः **एधि** भव ॥

[22]उदकुम्भेन परिषेचनम्—**शिवमिति** ॥ इदं वास्तु **शिवं** भवतु । आदरार्थं पुनर्वचनम् ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने पञ्चदशः खण्डः.

[1]कूर्कुरस्सुकूर्कुरः कूर्कुरो वालबन्धनः । उपरिष्टाद्येजाय तृतीयस्या इतो दिवः । [2]औलब इत्तमुपाह्वयथार्जीञ्छ्यामशबलः । अधोराम उलुम्बलस्सारमेयो ह धावति । समुद्रमवचाकशत् ।

---

[1]श्वग्रहगृहीतस्यावोक्षणमन्त्राः—कूर्कुर इति ॥ कूर्कुरः । शुन एतन्नाम । सुकूर्कुरः सुष्ठु कूर्कुर इति शब्दस्य कर्ता । एवम्भूत एकश्श्वा । वालबन्धनश्चापरः कूर्कुरः, वालेन योऽन्यान् बध्नाति । उपरिष्टात् उपरिलोकात् यत् 'सुपां सुलुक्' इति सोर्लुक् । यः एजाय । एतेर्लिटि छान्दसो जकारः । एयाय आगच्छति । कुत उपरिष्टात्? तृतीयस्या इतः दिवः अस्य लोकस्य तृतीया द्यौः मध्ये अन्तरिक्षम् ॥

[2]औलब इति ॥ उलबस्यापत्यं औलबः । प्रत्येकं सम्बन्धादेकवचनम् । इच्छब्दोऽनर्थकः । तं श्वानं उपाह्वयथ । लोडर्थे लट् । उपशब्दोऽपेत्यस्यार्थे । अपाह्वयत । यथा इतः अपगतो भवति तथा शब्दानुच्चारयत हे परिचारकाः! मदीया इत्यर्थः । आर्जीन् ऋजेः पुत्रांश्चान्यानुपाह्वयथेत्येव । के पुनस्ते? श्यामः श्यामवर्णः शबलः शबलवर्णः अधोरामः अधोभागे कृष्णवर्णः उलुम्बलः उरुबलः ऋजेः पुत्रा एते चत्वारः तेषामेतानि नामानि अन्वर्थानि । अथ सारमेयः सरमानाम देवशुनी तस्या अपत्यं सारमेयः अपरश्श्वा । हशब्दोऽनर्थकः । धावति आधावति समुद्रं अन्तरिक्षं अवचाकशत् पश्यन् ॥

[3]बिभ्रन्निष्कं च रुक्मं च शुनामग्रं सुवीरिणः ।
सुवीरिण सृज सृज शुनक सृजैकव्रात्य सृज छत् ॥
[4]तत्सत्यं यत्त्वेन्द्रोऽब्रवीद्गास्स्पाशयस्वेति तास्त्वं स्पाशयित्वाऽऽगच्छस्तं त्वाऽब्रवीदविद् हा३ इत्यवि-

---

[3]**बिभ्रन्निति** ॥ **बिभ्रत्** धारयन् **निष्कं च रुक्मं च** आभरणे । **शुनामग्रं** प्रधानं **सुवीरिण** इति तस्य नाम । तं प्रत्याह—हे **सुवीरिण!** **सृजसृज** इमं बालं विसृज हे **शुनक!** अतिभक्षक! **सृज** विसृज **एकव्रात्य!** एकस्मिन् व्राते गणे शुनां मध्ये-प्रधान!. सुवीरिणस्यैवैते विशेषणे । **सृज** विसृज **छत्** भर्त्सनशब्दोऽयम् । यथा लोके छि इति* ॥

[4]**तत्सत्यमिति** ॥ अत्रेतिहासमाचक्षते—असुरा देवगवीरपहृत्य गिरिदुर्गे स्थापयित्वा द्वारमपिदधुः । तत इन्द्रः सरमापुत्रं सुवीरिणमाहूय अब्रवीत् । हे सुवीरिण! गत्वा जानीहि कैरपहृता गावः† क्व तिष्ठन्तीति । ज्ञात्वा च अपहर्तॄन् बाधयित्वा‡ लब्ध्वैव गा आगच्छेति । स तथाऽकरोत् । तस्मै चागताय वरमदादिन्द्र इति । तदिदमत्रोच्यते—तत्सत्यं यत् त्वामिन्द्रः अब्रवीत् गाः अपहृताः स्पाशयस्व । स्पश बाधनस्पर्शनयोः, इह तु बाधनपूर्वके लाभे द्रष्टव्यः । बाधित्वा लभस्वेति त्वं च ताः स्पाशयित्वा बाधेन लब्ध्वा इन्द्रं प्रत्यागच्छः तं त्वा त्वां इन्द्रः अब्रवीत् अविद । छान्दसो विसर्जनीयस्य लोपः ।

---

*छे इति. † असुरैरपहृता गावः. ‡खादयित्वा.

दूंहीति वरं वृणीष्वेति कुमारमेवाहं वरं वृण इत्य-
ब्रवीर्विगृह्य बाहू प्रवसे द्यामवचाकशत् । [5]बिभ्र-
न्निष्कं च रुक्मं च शुनामग्रं सुवीरिणः । सुवी-
रिण सृजसृज शुनक सृजैकव्रात्य सृजच्छत् ।
[6]तत्सत्यं यत्ते सरमा माता लोहितः पिता । अ-

---

अविदः लब्धवानसि । हा इति प्रश्नद्योतको निपातः । तस्य प्रश्ने प्लुतः । ततस्त्वमिन्द्रमब्रवीः—अविदं हीति । अविदं लब्धवानस्मि । हीति अभ्युपगमं द्योतयति । पुनरिन्द्रोऽब्रवीत् वरं वृणीष्वेति । त्वं च पुनरब्रवीः कुमारमेवाहं वरं वृणे इति । कुमारानहं बाधेयेति । तदेतत्सर्वं सत्यम्, यदिदानीं इमं बालं बाधसे । त्वं हि विगृह्य विकृष्य बाहू प्लवसे आगच्छसि आकाशं नदीं वा तरसि दिव आगच्छन् । तथा च बह्वृचाः सरमासूक्ते अधी-यते—'कथं रसाया अतरः पयांसि'* इति । रसा आकाशनदी । द्यामवचाकशत् आकाशं पश्यन् ॥

[5]बिभ्रन्निष्कं चेति ॥ गतम् ॥

[6]तत्सत्यमिति ॥ तत् सत्यं यत्ते सरमा नाम माता रोहितो नाम पिता । अथान्ये श्वानः अमी यूयं एके केचित् सरस्यकाः सरसि भवाः रस्येन रसनीयेन मांसादिना वा सहिताः अवधावति धावत । लकारस्य व्यत्ययः । अधोमुखा गच्छत । कुतः? तृतीयस्या इतो दिवः ॥

---

*ऋ. १०-१०८-१.

मी एके सरस्युका अवपार्वति तृतीयस्या इनो दिवः । [7]तेकश्च ससरमतण्डश्च तूलश्च वितूलश्चार्जुनश्च लोहितश्च । दुला ह नाम वो माता मन्थाकको ह वः पिता । स तक्षा हन्ति चक्री वो न सीसरीदत । [8]छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर । समश्वा वृषाणः पदो न सीसरीदत । [9]छदपेहि सीसरम सारमेय नमस्ते अस्तु सीसर । श्वानमि-

---

[7]के पुनस्ते ?—तेक इति ॥ तेकः ससरमतण्डः तूलः वितूलः अर्जुनः लोहितः इति षट् । वः युष्माकं दुला नाम माता मन्थाकको नाम च पिता । अत्रागतान् वः अस्मत्परिचारकः तक्षा चक्री चक्रवान् आयुधहस्तः संहन्ति सम्यक् हनिष्यति अतश्च न सीसरीदत नोपसर्पत ॥

[8]इमावपरौ सरमायाः पुत्रौ सीसरमस्सीसरश्च । तौ प्रत्याह—छदपेहीति ॥ हे सीसरम ! हे सारमेय ! अपेहि अपगच्छ । हे सीसर ! हे सारमेय ! नमस्ते अस्तु । समित्यस्याख्यातेन सम्बन्धः । अश्वाः मदीयाः वृषाणः वर्षणसमर्थाः बलवन्तः-पदो न पादा इव संसीसरीदत । पुरुषव्यत्ययः । संसर्पन्तु संसर्पत युवां प्रतिगच्छतम् ॥

[9]छदपेहीति ॥ गतम् । सर्वानेव शुनः प्रत्याह—श्वानमित्

च्छ्वाऽदन्न पुरुषं छत् । [10]एते ते प्रतिदृश्येते समानवं-सने उभे । ते अहꣳ सारयेण मुसलेनावहन्म्युलूखले । [11]हतश्शङ्खो हतश्शंखपिता हतश्शंखकुतुर्वकः। अप्येषाꣳ स्थपतिर् हतः। [12]ऋषिर्बोधः प्रबोधस्स्वप्नो मातरिश्वा । ते ते प्राणान्थ्स्पंरिष्यन्ति मा भैषीर्न

---

श्वानमेव **श्वा** यःकश्चिदिहागतः **अदत्** अत्तु **न पुरुषं** इमं कुमारम् । **छत्** भर्त्सनशब्दोऽयम्* ॥

[10]शङ्खग्रहगृहीतस्याभिमन्त्रणमन्त्रौ—एते इति ॥ **ते** प्रसिद्धे **एते** शङ्खग्रहाणां, मातरौ **प्रतिदृश्येते** अवलोक्येते **समानवसने** सरूपवस्त्रे **उभे, ते अहं उलूखले** कृत्वा **सारयेण** सारमयेन, दृढेन **मुसलेन अवहन्मि** ॥

[11]हतश्शङ्ख इति ॥**शङ्खः शङ्खग्रहो हतः** । **शङ्खपिता हतः** । **शङ्खकुतुर्वकः** कुतुर्वको हिंसकः कुत्सितः तुर्वकः, शङ्खश्चासौ कुतुर्वकश्च शङ्खकुतुर्वकः अयं च **हतः** । **अप्येषां** शङ्खानां **स्थपतिः** स्वामी **हतः** ॥

[12]उत्तरया उदकुम्भेन शिरस्तोऽवनयति—ऋषिर्बोध इति ॥ यस्य गोत्रं बोधायनः स बोध **ऋषिः प्रबोधः** प्रबुद्धता **स्वप्नः** स्वापः **मातरिश्वा** वायुः ते एते **ते** तव **प्राणान् स्परिष्यन्ति** पालयिष्यन्ति अतश्च **न मरिष्यसि** ततो **मा भैषीः** हे कुमार ! ॥

---

*स्वनशब्दोऽयम्.

मरिष्यसि । [13]जग्धो मशको जग्धा वितृष्टिर्जग्धो व्यध्वरस्स्वाहा [14]जग्धो व्यध्वरो जग्धो मशको जग्धा वितृष्टिस्स्वाहा [15]जग्धा वितृष्टिर्जग्धो व्यध्वरो जग्धो मशकस्स्वाहा ॥ १६ ॥

पिताऽवहन्म्युलूखले पञ्च च ॥ १६ ॥

[1]इन्द्र जहि दन्दशूकं पक्षिणं यस्सरीसृपः । दङ्क्षणन्तं च दशन्तं च सर्वाꣳस्तानिन्द्र जम्भय

[13—15]सर्पबलौ किंशुकहोममन्त्राः—जग्ध इति ॥ जग्धः भक्षितः मशकः तन्नामा सर्पः । एवं व्यध्वरः । वितृष्टिः सर्पः* । स्पष्टमन्यत्॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने षोडशः खण्डः.

---

[1]समिद्धोमः—इन्द्रेति ॥ हे इन्द्र! जहि अस्माकं बाधकं दन्दशूकं सर्पं पक्षिणं पक्षाकाराभ्यां† पार्श्वाभ्यां युक्तं यस्सरीसृपः सर्पणस्वभावः दङ्क्षणन्तं दंशने प्रवर्तिष्यमाणं दशन्तं प्रवर्तमानं च सर्वांस्तान् एवंविधान् हे इन्द्र! जम्भय स्तम्भय । आख्यातभेदादामन्त्रणभेदः ॥

*सर्पा. †पक्षाभ्यां.

स्वाहा । [2]अप्सु जात सरे वृद्ध देवानामपि हस्त्य । त्वमग्न इन्द्रप्रेषितस्स नो मा हिꣳसीस्स्वाहा । [3]त्राणमसि परित्राणमसि परिधिरसि । अन्नेन मनुष्याꣳस्त्रायसे तृणैः पशून्गर्तेन सर्पान् यज्ञेन दे-

[2]अप्स्विति ॥ **अप्सु जात!** वैद्युतरूपेण **सरे** सरसि समुद्रे **वृद्ध!** बाडबस्वरूपेण **देवानां हस्त्य!** हस्ते भव! । अपिः पादपूरणः । एवम्भूत! हे **अग्ने!** **त्वं इन्द्रप्रेषितः** कर्माणि करोषि । वयं च इन्द्रस्य भक्ताः । **स** त्वं **नः** अस्मान् **मा हिंसीः** सर्पकृता हिंसा यथा अस्माकं न भवति तथा कुर्वित्यर्थः ॥

[3]**त्राणमसीति** ॥ न केवलं **त्राणं, परित्राणमसि** सर्वतस्त्राणमसि **परिधिरसि** परित्राणाय यस्सर्वतो निधीयते स परिधिः सोऽप्यसि । **अन्नेन मनुष्यान् त्रायसे** बहिस्तावदग्निरन्नं पचति, भुक्तं च जरयति वैश्वानररूपेण । **तृणैः पशून्** त्रायसे तृणान्यग्निर्जनयति वृष्टेरग्न्यायत्तत्वात् 'अग्नौ प्रास्ताहुतिः'* इति दर्शनात् । **गर्तेन सर्पान्** त्रायसे गर्तो बिलम् । सूर्यांशुसन्तप्ता हि भूमिः बिलानि दर्शयति सूर्यश्चाग्नेर्नातीव भिन्नः, स हि अस्तं गतोऽग्निं प्रविशति । बिलाच्च निर्गतानां सर्पाणां ध्रुवो† वधः । अत इदमुच्यते—गर्तेन सर्पांस्त्रायस इति । **यज्ञेन देवान्** त्रायसे हव्यवाहनत्वात् । **स्वधया पितॄन्** त्रायसे कव्यवाहनत्वात् । तदेवमाग्नेय्येषा ॥

*मनु.३-७६. †सुलभो.

वान्थ्स्वधया पितॄन्थ्स्वाहा । [4]तथ्सत्यं यत्तेऽमावास्यायां च पौर्णमास्यां च विषबलिꣳ हरन्ति सर्वे उदरसर्पिणः । तत्ते प्रेरते त्वयि संविशन्ति त्वयि नस्सतस्त्वयि सद्भ्यो वर्षाभ्यो नः परिदेहि ।

---

[4]आज्याहुतिमन्त्राः—तत्सत्यमिति ॥ सर्पाणामधिपतिस्स्तूयते । यत्तेऽमावास्यायां च पौर्णमास्यां च विषबलिं हरन्ति विषभयनिवृत्त्यर्थं बलिं हरन्ति मनुष्याः । सर्वे च उदरसर्पिणः सर्पाः तत् बलिं ते त्वत्तः प्रेरते प्राप्नुवन्ति । प्राप्य च त्वयि संविशन्ति त्वामाश्रित्य वर्तन्त इति यत्तत्सत्यमित्यर्थः । ततश्च त्वयि नस्सतः त्वदाश्रयानस्मान् त्वयि सद्भ्यः त्वदाश्रयेभ्यः सर्वेभ्यः रक्षार्थं परिदेहि यथा ते न हिंस्युः, वर्षाभ्यश्च परिदेहि वर्षर्तौ सर्पा बहुलीभवन्तीति तस्यैव परिदानम् । ऋतुना संवत्सरो लक्ष्यते । वर्षाभ्यः वर्षार्थं, यथा नः अस्मान् संवत्सरे न हिंस्युः तथा सर्वेभ्यः परिदेहि ॥

[5]नमो अस्तु सर्पेभ्य इति ॥ ये के च यावन्तः पृथिवीमनु श्रिताः, ये अन्तरिक्षे ये दिवि च श्रिताः तेभ्यः सर्पेभ्यः नमः अस्तु ॥

[6]येऽद इति ॥ ये सर्पाः अदः । सप्तम्या लुक् । अमुष्मिन्

---

[(5)]नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यस्सर्पेभ्यो नमः ॥

[5–7]नमो अस्तु सर्पेभ्य इति तिस्रः । [8]नमो अस्तु सर्पेभ्यो ये पार्थिवा य आन्तरिक्ष्या ये दिव्या ये दिश्याः । तेभ्य इमं बलिꣳ हरिष्यामि तेभ्य इमं

---

रोचने दीप्ते स्थाने दिवः सम्बन्धिनि ये वा सूर्यस्य रश्मिषु सर्पाः येषां सर्पाणां अप्सु सदः स्थानं कृतं तेभ्यः सर्पेभ्यो नमः ॥

[7]या इति ॥ या इषवः । इषुशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता । ये सर्पाः यातुधानानां इषुभूताः ये वा वनस्पतीन् अनु श्रिताः ये वा अवटेषु बिलेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥

[8]बलिहरणमन्त्रः—नमो अस्त्वाति ॥ ये पार्थिवाः पृथिव्यां भवाः ये आन्तरिक्ष्याः अन्तरिक्षे भवाः । 'भवे छन्दसि' इति यत्, छान्दसत्वादादिवृद्धिः । ये दिव्याः दिवि भवाः ये दिश्याः दिक्षु च भवाः तेभ्यः सर्पेभ्यः नमो अस्तु इमं बलिं हरिष्यामि एवं

---

(6)येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
येषामप्सु सदः कृतं तेभ्यस्सर्पेभ्यो नमः ॥
(7)या इषवो यातुधानानां ये वा वनस्पतीꣳरनु ।
ये वाऽवटेषु शेरते तेभ्यस्सर्पेभ्यो नमः ॥
(तै. सं. ४-२-८.)

बलिमहार्षम् । [9]तक्षक वैशालेय धृतराष्ट्रैरावतस्ते जीवास्त्वयि नस्सतस्त्वयि सद्भ्यो वर्षाभ्यो नः परिदेहि । [10]धृतराष्ट्रैरावत तक्षक वैशालेयस्ते जीवास्त्वयि नस्सतस्त्वयि सद्भ्यो वर्षाभ्यो नः परिदेहि । [11]अहिꣳसातिबलस्ते जीवास्त्वयि नस्सतस्त्वयि सद्भ्यो वर्षाभ्यो नः परिदेहि । [12]अति-

---

आमार्गशीर्ष्याः । मार्गशीर्ष्यां तु तेभ्य इमं बलिं अहार्षमिति हृतवानस्मि ॥

[9–10]उपस्थानमन्त्राः—तक्षकेति ॥ हे तक्षक ! तस्यैव विशेषणं वैशालेय! विशालाया अपत्य ! धृतराष्ट्रश्चासावैरावतश्चेति धृतराष्ट्रैरावतः एवंनामा सर्पः ते तव जीवाः प्राणाः, प्राणानां बहुत्वाद्बहुवचनम् । ऐरावताख्यस्सर्पः ते प्राणाः । त्वयि नस्सत इति गतम् । त्वयि सद्भ्यः जीवेभ्यः इति विशेषः । एवं हे धृतराष्ट्रैरावत ! तक्षक ! वैशालेयस्ते जीवाः इत्यादि । अन्योन्यस्मै परिदानमुभाभ्यां मन्त्राभ्याम् ॥

[11–12]अहिंसेति ॥ अहिंसोनाम सर्पः । तथा अतिबलः । हे अहिंस ! अतिबलस्ते जीवा इत्यादि । हे अतिबल ! अहिंसस्ते जीवा इत्यादि च । अत्राप्यन्योन्यस्मै परिदानम् ॥

[13]य इति ॥ ये दन्दशूकाः सर्पाः पार्थिवाः तान् त्वम् । सर्पराजं प्रति वचनम् । इतः अस्मात् गृहात् परोगव्यूति

बलाहिꣳसस्ते जीवास्त्वयि नस्सतस्त्वयि सद्भ्यो वरूपाभ्यो नः परिदेहि । [13]ये दन्दशूकाः पार्थिवास्ताꣳस्त्वमितः परोगव्यूति निवेशय । सन्ति वै नꣳशफिनस्सन्ति दण्डिनस्ते वो नेह्निनसान्नयेद्यूयमस्मान् हिनसात । [14—19]समीची नामासि प्राची

---

गव्यूतिः क्रोशयुगं ततः परस्तात निवेशय । सर्वानेव सर्पान् प्रत्याह—सन्तीति । वै प्रसिद्धौ । नः अस्माकं गृहे शफिनः शफवन्तो गवादयः सन्ति ये युष्मान् मृद्गीयुः । सन्ति च दण्डिनः दण्डहस्ताः पुरुषाः ये युष्मान् प्रहरेयुः । ते शफिनो दण्डहस्ताश्च वः युष्मान् नेत् नैव हिनसात् हिंस्युः । न्येत् नैव । छान्दसो यकारः । यूयमस्मान् हिनसात न हिंस्यात । यदि यूयमस्मान् न हिंस्यात तेऽपि युष्मान् न हिंस्युरित्यर्थः । उपसंवादे पञ्चमो लकारः । उपसंवादः परिभाषणं कर्तव्ये पणबन्धः ॥

[14]समीची नामेति ॥ समीची नामासि प्राची दिक् या प्राची दिक् सा त्वं समीचीनामासीत्यर्थः । तस्यास्तेऽग्निरधिपतिः

---

(14)समीची नामासि प्राची दिक्तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

**असितो** नाम **सर्पः** ते **रक्षिता यश्चाधिपतिः** अग्निः **यश्च गोप्ता** असितः **ताभ्यां** नमः **तौ** नः अस्मान् **मृडयतां** सुखयताम् । एतावानंशः परोक्षकृतः प्रथमपुरुषयोगात् । शेषः प्रत्यक्षकृतः वामिति युष्मच्छब्दयोगात् । **ते** वयं **यं द्विष्मः यश्च नः** अस्मान् **द्वेष्टि तं** पुरुषं **वां** युवयोः **जम्भे** । बहुषु एकवचनम् । जम्भेषु दन्तेषु **दधामि** । वचनव्यत्ययः । दध्मः स्थापयामः भक्षणार्थम् ॥

[15—19]**ओजस्विनीत्यादि** ॥ सर्वत्राधिपतयः प्रसिद्धाः । रक्षितारः सर्पाः । 'रक्षिता' इत्यादेश्च सर्वेष्वनुषङ्गः । **ओजस्विनी—पृदाकू रक्षिता । प्राची—स्वजो** रक्षिता । **अवस्थावा—तिरश्चराजी** रक्षिता । **अधिपत्नी—श्वित्रो** रक्षिता । **वशिनी—कल्माषग्रीवो** रक्षिता । बृहती दिक् ऊर्ध्वा दिक् । इयं

---

(15) ओजस्विनी नामासि दक्षिणा दिक्तस्यास्त इन्द्रोऽधिपतिः पृदाकू रक्षिता........दधामि ॥

(16) प्राची नामासि प्रतीची दिक्तस्यास्ते सोमोऽधिपतिस्स्वजो रक्षिता........दधामि ॥

(17) अवस्थावा नामास्युदीची दिक्तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजी रक्षिता......दधामि॥

(18) अधिपत्नी नामासि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिश्श्वित्रो रक्षिता........दधामि॥

[20—25]दिग्घेतयो नाम स्थेति द्वादश पर्यायाः । [26]अपं

---

दिक् अधो दिक् । असितादयो रूढिशब्दाः । यथाकथंचिद्वा योज्याः । अवस्थावेत्यत्र ङीब्रिफौ छान्दसत्वान्न कृतौ ॥

[20—25]हेतयो नाम स्थेति ॥ हेतिप्रभृतयः सर्पाः । गन्धर्वा इत्येके । यूयं हेतयो नाम स्थ तेषां वः पुरः पूर्वस्यां दिशि गृहाः अग्निर्व इषवः सलिलो वातनामम् । सलिलः सगरः गह्वरः समुद्रः अवस्वान् निमिष इति षडप्याकाशवाचिनः । व्युत्पत्तिस्तु यथाकथंचित् । वाताशनास्सर्पाः । तस्य वातस्य

---

(19)वशिनी नामांसीयं दिक्तस्यांस्ते यमोऽधिंपतिः कल्माषंग्रीवो रक्षिता........दधामि ॥

(20)हेतयो नामं स्थ तेषां वः पुरो गृहा अग्निर्व इषंवस्सलिलो वातनामं तेभ्यो वो नमस्ते नों मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भें दधामि ॥

(21)निलिम्पा नामं स्थ तेषां वो दक्षिणा गृहाः पितरों व इषंवस्सगरो वातनामं....दधामि॥

(22)वज्रिणो नामं स्थ तेषां वः पश्चाद्गृहास्स्वप्नों व इषंवो गह्वरो वातनामं........दधामि ॥

श्वेत पदा जहि पूर्वेण चापरेण च । सप्त च मानु-

---

नामयिता उपस्थापयिता, वातस्य आकाशप्रभवत्वात् । नपुंसक-लिङ्गं तु सामान्योपक्रमत्वात् । तेभ्यो वः हेतिभ्यो नमः । ते यूयं नः मृडयत सुखयत । ते वयं यं द्विष्मः यश्च नः अस्मान् द्वेष्टि तं वो युष्माकं जम्भे दन्तेषु दधामि । वच-नव्यत्ययः, दध्मः । एतेनोत्तरे पञ्च मन्त्रा व्याख्याताः । 'वात-नामम्' इत्यादेश्च सर्वत्रानुषङ्गः । निलिम्पा नाम स्थ—सग-रो वातनामम् । वज्रिणो नाम स्थ—गह्वरो वातनामम् । अवस्थावानो नाम स्थ—समुद्रो वातनामम् । अधिपतयो नाम स्थ—अवस्वान् वातनामम् । क्रव्या नामस्थ—निमिषो वा-तनामम् ॥

[26]प्रत्येत्य गृहपरिषेचनमन्त्रो—अप श्वेतेति ॥ श्वेतो नाम सर्पाणामधिपतिः । हे श्वेत! पदा पादेन अपजहि क्षोदय।

---

(23)अवस्था वानो नाम स्थ तेषां व उत्तराद्गृहा आपो व इषवस्समुद्रो वातनामं....दधामि॥

(24)अधिपतयो नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वान् वातनामं........दधामि॥

(25)क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवो निमिषो वातनामं......दधामि॥

(तै. सं. ६-५-१०.)

षीरिमास्तिस्रश्च राजबन्धवीः । [27]न वै श्वेतस्याध्याचारेऽहिर्जघान कंचन । श्वेताय वैदर्वाय नमो नमश्श्वेताय वैदर्वाय ॥ १७ ॥

दिश्या राजबन्धवीर्द्वे च ॥ १७ ॥

[1]परमेष्ठ्यसि परमां मा श्रियं गमय [2]प्रत्यवं-

---

पूर्वेण च पदा अपरेण च । गमनदशायामेतदुच्यते, तत्र हि पूर्वापरौ पादौ भवतः । अपहन्तव्यमाह—**सप्त च मानुषीरिमाः** सर्पजातीः, ब्राह्मणानां तिस्रः, वैश्यानां द्वे, शूद्राणां च द्वे । **तिस्रश्च राजबन्धवीः** राजसम्बन्धिनीः तिस्रः इति दश सर्पजातयः ॥

[27]**न वा इति** ॥ **श्वेतस्य** नागराजस्य **अध्याचारे** आधिपत्ये **अहिः** सर्पः **कंचन** कंचिदपि मनुष्यं **न वै जघान** अतः **श्वेताय वैदर्वाय** विदर्वपुत्राय **नमः** । आदरार्थं पुनर्वचनम्—**नमः श्वेताय वैदर्वाय** ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने

सप्तदशः खण्डः.

---

[1]आग्रयणे हुतशेषं पिण्डीकृत्योत्तरेण यजुषाऽगारस्तूपे उद्विह्वेत्*—**परमेष्ठ्यसीति** ॥ हे उदनपिण्ड! **परमेष्ठ्यसि** इदानीं परमे स्थाने स्थितोऽसि **मां** च **परमां श्रियं गमय** ॥

---

*उद्विह्वयेत.

रूढो नो हेमन्तः । [3]प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे [4]प्रत्यश्वेषु प्रति तिष्ठामि गोषु । [5]प्रति प्रजायां प्रति तिष्ठामि भव्ये । [6]इह धृतिरिह विधृति[7]रिह रन्तिरिह रमतिः । [8]स्योना पृथिवि [9]बडित्था पर्वताना-

[2]हेमन्तप्रत्यवरोहणम्—प्रत्यवरूढ इति ॥ नः अस्माभिः हेमन्तः ऋतुः प्रत्यवरूढः नवस्वस्तरे संवेष्टुं हेमन्तमृतुं प्रति खट्वाशयामवरोहाम इत्युक्तं भवति ॥

[3—7]संवेशनमन्त्राः*—प्रतिक्षत्र इति ॥ नवस्वस्तरे संविशन् अहं क्षत्रादिष्वेव प्रति तिष्ठामीत्यर्थः । भव्यं मङ्गलम् । इह स्वस्तरे धृतिः प्रीतिः विधृतिः स्वधैर्यं रन्तिः रतिः रमतिः पुत्रादिभिः क्रीडनम् ॥

[8]उत्तराभ्यां पृथिवीमभिमृशति—स्योना पृथिवीति ॥ गता ॥

[9]बडित्थेति ॥ बट् सत्यं इत्था इत्थं अनेन वक्ष्यमाणप्रकारेण पर्वतानां मेघानां खिद्रं छिद्रं छेदनं विभर्षि धारयसि करोषि हे पृथिवि! हे भूमि! प्रवत्वति! प्रवणवति! या त्वं मह्ना

(8)अयं मन्त्रः (१५०) पत्रे लिखितः.

(9)बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमि प्रवत्वति मह्ना जिनोषि महिनि॥

*मन्त्रौ.

(सं. २-२-१२.)

मिति द्वे । [10]आ त्वा वहन्तु हरयस्सचेतसश्श्वेतैर-श्वैस्सह केतुमद्भिः । वाताजिरैरायाहि मम हव्याय शर्वोप[11]स्पृशतु मीढ्वान्मीढुषे स्वाहो[12]पस्पृशतु मीढुषी मीढुष्यै स्वाहा [13]जयन्तोपस्पृश जयन्ताय स्वाहा [14]भवाय देवाय स्वाहा [15]शर्वाय देवाय स्वाहे[16]शानाय देवाय स्वाहा [17]पशुपतये देवाय स्वाहा [18]रुद्राय देवाय स्वाहो[19]ग्राय देवाय स्वाहा [20]भीमा-

---

स्वेन महिम्ना **प्रजिनोषि** तर्पयसि । कान्? देवान् । हे **महिनि!** महति! ओषधीभिः पशुभिश्च देवा इज्यन्ते तेन च पार्थिवाः, ते च तृप्ता देवाः प्रवर्षणार्थं मेघान्भिन्दन्ति, एतेन प्रकारेण पर्वतानां खिद्रं बिभर्षीति ॥

[10]अथेशानबलिः । ईशानमावाहयति—**आ त्वेति** ॥ **हरयो** हरितवर्णाः अश्वाः त्वा त्वां आवहन्तु **सचेतसः** अभिप्रायज्ञाः **श्वेतैः अश्वैः सह केतुमद्भिः** केतुर्ध्वजः तद्युक्तैः **वाताजिरैः** । अज गतिक्षेपणयोः । वातगतिभिः **आयाहि** । किमर्थं? **मम हव्याय** मदीयस्य हविष उपभोगाय । हे **शर्व!** ॥

[11–30]ओदनमुपस्पर्शयति—**उपस्पृशत्विति** ॥ **उपस्पृशतु** स्वीकरोतु **मीढ्वान्** 'मध्यमस्थानो रुद्रो वर्षिता' इति नैरुक्ताः । जगदुपादाने स्ववीर्यस्य सेक्तेति पौराणिकाः । तस्मै **मीढुषे । मीढुषी** मध्यमस्थाना वाक् **रुद्रस्य** पत्नीति नैरुक्ताः । जगत्प्रतिकृतिरूपेति

यं देवाय स्वाहा [21]महते देवाय स्वाहा [22]भवस्य देवस्य पत्न्यै स्वाहा [23]शर्वस्य देवस्य पत्न्यै स्वाहा [24]ईशानस्य देवस्य पत्न्यै स्वाहा [25]पशुपतेर्देवस्य पत्न्यै स्वाहा [26]रुद्रस्य देवस्य पत्न्यै स्वाहो[27]ग्रस्य देवस्य पत्न्यै स्वाहा [28]भीमस्य देवस्य पत्न्यै स्वाहा [29]महतो देवस्य पत्न्यै स्वाहा [30]जयन्ताय स्वा-

---

पौराणिकाः । तस्यै मीढुष्यै । जयन्तः स्कन्दः तस्मै । भवादयोऽष्टौ भगवतो मूर्तयः । ताश्च—

> आपो भूर्मातरिश्वाऽग्निस्सूर्यो दीक्षित एव च ।
> आकाशश्चन्द्र इत्येषामधिष्ठात्र्यश्च तास्स्मृताः ॥

इत्येषा पुराणप्रक्रिया । अथवा—भावयतीति भवः । अन्तर्भावितण्यर्थः । समस्तस्य जगतः कर्ता । शर्वः संहर्ता । शॄ हिंसायाम् । ईशानः ईश्वरस्सर्वस्य । पशुपतिः पशवो द्विपादश्च चतुष्पादश्च तेषां पाता । रुद्रो रोदयिता संहारकाले । उग्रः अनभिभवनीयः । 'उग्रं हास्य राष्ट्रमव्यथ्यं भवति', इति दर्शनात् । बिभ्यत्यस्मात्सर्वाणि भूतानीति भीमः । महान् सर्वेभ्यः । 'भवस्य देवस्य' इत्यादयोऽप्यनेनैव न्यायेन गताः ॥

[31]स्विष्टकृन्मन्त्रः—अग्नय इति ॥ स्विष्टकृते रुद्रोऽग्निस्स्विष्टकृत् ।

हा॒ऽ[31]ग्नये॑ स्विष्टकृ॒ते॒ सु॒हु॑तहु॒दा॒हु॑ती॒ना॒ं॑ कामा॑ना॒ꣳ॒ समर्धयि॒त्रे॒ स्वाहा॑ । [32]स्व॒स्ति न॑ः पू॒र्ण॒मु॒खः॒ परि॑-क्रामतु॒ [33]गृ॒ह॒पोप॑स्पृश गृ॒ह॒पा॒य॒ स्वाहा॑ [34]गृ॒ह॒प्युप॑-स्पृश गृ॒ह॒प्यै॒ स्वाहा॑ [35]घो॒षि॒ण॒ उप॑स्पृशत घो॒षि-भ्य॒स्स्वाहा॑ [36]श्वा॒सि॒न॒ उप॑स्पृशत श्वा॒सिभ्य॒स्स्वाहा॑ [37]वि॒चि॒न्वन्त॒ उप॑स्पृशत वि॒चि॒न्वद्भ्य॒स्स्वाहा॑ [38]प्र-पु॒न्वन्त॒ उप॑स्पृशत प्रपु॒न्वद्भ्य॒स्स्वाहा॑ [39]सम॒श्नन्त॒ उप॑स्पृशत सम॒श्नद्भ्य॒स्स्वाहा॑ [40]देव॒से॒ना उप॑स्पृश-त देव॒से॒नाभ्य॒स्स्वाहा॒ [41]या आ॒ख्या॑ता॒ याश्चाना-

---

सुहुतं जुहोति करोतीति सुहुतहुत् तस्मै आहुतीनां कामानां च समर्धयित्रे संवर्धयित्रे प्रापयित्रे वा अग्नये ॥

[32]उपस्थानम्—स्वस्ति न इति ॥ आहुतिभिः पूर्णमुखो देवः नः यथाऽस्माकं स्वस्ति भवति तथा परिक्रामतु सञ्चरतु ॥

[33–45]पर्णदानं—गृहपेति ॥ गृहान् पातीति गृहपः देवः 'नमो रुद्राय वास्तोष्पतये '* इति दर्शनात् । देवस्य वा गृहपो गृह-पालः नन्दीश्वरकुमारः । हे गृहप ! गृहपते! उपस्पृश इमं बलिं गृहाण गृहपाय तुभ्यं स्वाहा ददामि । गृहपी गृहपस्य देवी । हे गृहपि ! । घोषिणो घोषवन्तः । श्वासिनः श्वासवन्तः । विचिन्वन्तः । विपूर्वश्चिनोतिरन्वेषणार्थः । अन्विष्यन्तः । प्रपु-

---

*ब्रा. ३-७-९.

ख्याता देवसेना उपस्पृशत देवसेनाभ्यस्स्वाहा [42]द्वारा*पोपस्पृश द्वारा*पाय स्वाहा [43]द्वारा*प्युपस्पृश द्वारा*प्यै स्वाहाऽ[44]न्वासारिण उपस्पृशतान्वासारिभ्यस्स्वाहा [45]निषङ्गिन्नुपस्पृश निषङ्गिणे स्वाहा [46]नमो

---

न्वन्तः शोधयन्तः । समश्नन्तः सहाश्नन्तः । एते देवस्य सर्वगणाः । हे देवसेनाः! उपस्पृशत देवसेनाभ्यो युष्मभ्यं स्वाहा। या आख्याताः अस्मिन्मन्त्रगणे, याश्चानाख्याताः ता यूयं देवसेनाः । द्वारापः देवस्य द्वारपालः । द्वारापी देव्याः द्वारपालिनी । अन्वासारिणोऽपि तस्यैवानुचराः† अन्तःपुरेऽधिकृताः। हे निषङ्गिन्! इषुधिमन्! जयन्तस्येदमामन्त्रणम् ॥

[46]शिक्यं वृक्षे आसजति—नमो निषङ्गिण इति ॥ इषुधिनिषङ्गशब्दौ पर्यायौ, इह तु निषङ्ग इति इषुव्यतिरिक्तानां शस्त्राणामावासस्थानम् । एतावदेव यजुः, न तु रुद्रेषु पठितस्य प्रतीकग्रहणम्। यदि तथैव स्यात् 'नमो निषङ्गिण इषुधिमत इत्येतत्' इति ब्रूयात्। यथा—'आशासाने त्येषा,‡ तत्सवितुर्वरेण्यमित्येषा'§ इति। अत्र रुद्रान् जपेत्। रुद्रा अन्यत्र व्याख्याताः॥

[47—48]क्षेत्रस्य पतेरुपस्थानमन्त्रौ—क्षेत्रस्येति ॥ क्षेत्रस्य पतिना वयं हितेनेव मित्रादिना जयामसि जेतव्यं जयामः। स च क्षेत्रपतिः नः अस्माकं गामश्वं च पोषयित्नु । लिङ्गव्यत्ययः । पोषयिता

---

*द्वारप. †तस्या अनुचराः. ‡१-२-७. §२-४-१३.

**निषङ्गिणं इषुधिमते [47—48]क्षेत्रस्य पतिना वयमिति द्वे ॥ १८ ॥**

**परमेष्ठ्यसि परमामष्टौ ॥ १८ ॥**

---

आकारस्समुच्चये, मृडाति सुखकर्माऽयं, मृडयेत् सुखयेत् ईदृशे कर्मणि कृते । हे **क्षेत्रस्य पते** ! **मधुमन्तं** मधुस्वादेन क्षीरादिना युक्तं **ऊर्मिं** ऊर्म्याकारं गवां समुदायम् । तस्य विशेषणं— **मधुश्चुतं घृतमिव सुपूतमिति** च । भवति कश्चित् मधुमान् न च मधुश्चुत्, यथा घटादि दृढम् । भवति कश्चित् मधुश्चुत् न च मधुमान्, यथा मधुभाजनस्य छिद्रम् । अतः मधुमन्तं मधुश्चुतमिति द्वयमुपात्तम्, यथा मधुमन्तो मधुश्चुत् मधुमांश्च, तद्वदुभयगुणविशिष्टं घृतमिव सुपूतं वस्त्रादिना सुष्ठु शोधितं एवंभूतं गवामूर्मिं **अस्मासु धुक्ष्व** क्षर **धेनुरिव पयः** यथा धेनुः पयो दुग्धे तद्वत् । किञ्च—त्वत्प्रसादात् **ऋतस्य** यज्ञस्य **पतयः** अग्न्यादयः **नः** अस्मान् **मृडयन्तु** सुखयन्तु ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
अष्टादशः खण्डः.

---

**(47)क्षेत्रस्य पतिना वयꣳ हितेनेव जयामसि ।**
**गामश्वं पोषयित्न्वा स नो मृडातीदृशे ॥**
**(48)क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥** (सं. १-१-१४.)

[1]यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता वृङ्क्तां माऽऽभुरन्योऽवपद्यताममुष्मै स्वाहा ॥ [2]यास्तिष्ठन्ति या धावन्ति या आर्द्रोघ्नीः परितस्थुषीः । अद्भिर्विश्वस्य भर्त्रीभिरन्तरन्यं पितुर्दधेऽमुष्मै स्वाहा । [3]यन्मे पितामही प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पितामहो वृङ्क्तां माऽऽभुरन्योऽवप-

---

[1]मासिश्राद्धे होममन्त्राः—यन्मे मातेति ॥ यत् रेतोऽन्यदीयं मे मम **माता** भर्तुः **अननुव्रता** अननुकूला **चरती** चरन्ती **प्रलुलोभ** प्रकर्षेण इयेष । साध्वीनामपि मानसव्यभिचारसम्भवादेवमुच्यते । **तत् रेतः मे पिता वृङ्क्तां** आच्छिद्य स्वीकरोतु मानसव्यभिचारनिमित्तं रेतसि साङ्कर्यं मा भूत् । आभवतीति **आभुः** एतावता निमित्तेन **मा** मां प्रति पितृत्वेन आभवन् **अन्यः अवपद्यतां** मोघाशो भवतु यन्मया दीयमानं हविः तन्न लभतां **अमुष्मै** यज्ञशर्मणे मत्पित्रे **स्वाहा** ॥

[2]**या इति** ॥ या आपः **तिष्ठन्ति** तटाकादिषु **याश्च धावन्ति** नदीषु **याश्च परितस्थुषीः** परितस्थुष्यः परितस्तिष्ठन्त्यः **आर्द्रोघ्नीः** आर्द्रोघ्न्यो भवन्ति कूल्यादिकमार्द्रप्रदेशं घ्नन्तीत्यर्थः । ताभिः **अद्भिः विश्वस्य भर्त्रीभिः पितुरन्यं** अस्मिन्कर्मणि भागित्वेनागच्छन्तं **अन्तर्दधे** व्यवहितं करोमि । शिष्टं गतम् ॥

[3]**यन्मे पितामहीत्यादि** ॥ पूर्ववत् ॥

द्यताममुष्मै स्वाहा । [4]अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । आभिर्दिग्भिरनन्ताभिरन्तरन्यं पितामहाद्दधेऽमुष्मै स्वाहा । [5]यन्मे प्रपितामही प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः प्रपितामहो वृङ्क्तां माऽऽभुरन्योऽवपद्यताममुष्मै स्वाहा । [6]अन्तर्दध ऋतुभिरहोरात्रैस्ससन्धिभिः । अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधेऽमुष्मै स्वाहा । [7]ये चेह पितरो ये च नेह यांश्च विद्म यां उ च न प्रविद्म । अग्ने तान् वेत्थ यदि ते जातवेदस्तया प्रत्तꣳ स्वधया

---

[4]अन्तर्दध इति ॥ पर्वतैः मेरुप्रभृतिभिः अन्तर्दधे मह्या महत्या पृथिव्या आभिश्च दिग्भिः प्राच्यादिभिः अनन्ताभिः देशतः कालतश्च अन्तरहिताभिः पितामहादन्यमन्तर्दधे ॥

[5]यन्मे प्रपितामहीत्यादि ॥ पूर्ववत् ॥

[6]अन्तर्दध इति ॥ ऋत्वादयः प्रसिद्धाः । सन्धयस्तेषामेव ऋत्वादीनाम् । तैः प्रपितामहादन्यमन्तर्दधे ॥

[7]य इति ॥ ये च पितरः इह लोके तिष्ठन्ति ये च नेह तिष्ठन्ति यांश्च वयं विद्म जानीमः । यान् उ च । उकारोऽनर्थकः । न प्रविद्म । हे अग्ने! जातवेदः! यदि त्वं

मदन्तु स्वाहा । [8]स्वाहा पित्रे । [9]पित्रे स्वाहा । [10]स्वाहा पित्रे । [11]पित्रे स्वाहा । [12]स्वधा स्वाहा । [13]अग्नये कव्यवाहनाय स्वधा स्वाहा । [14]एष ते तत मधुमाꣳ ऊर्मिस्सरस्वान् यावानग्निश्च पृथिवी च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथाऽग्निरक्षितोऽनुपदस्त एवं मह्यं पित्रेऽक्षितोऽनुपदस्तस्स्वधा भव तां त्वꣳ स्वधां तैस्सहोपजीवचस्ते महि [15]मैष ते पितामह मधुमाꣳ ऊर्मिस्सरस्वान् यावान् वायुश्चान्तरिक्षं च तावस्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथा वायुरक्षितोऽ-

---

तान् वेत्थ जानासि तेभ्यो यथार्हं त्वमेव प्रतिपादय । ते च तया प्रत्तम् । लिङ्गविभक्तिव्यत्ययः । प्रत्तया स्वधया मदन्तु तृप्यन्तु ॥

[8–13]स्वाहा पित्रे इत्यादयो निगदसिद्धाः । कव्यवाहनः पितॄणामग्निः ॥

[14–16]सर्वमन्त्रमुत्तरैरभिमृशेत्—हे तत! पितः! एष ते ऊर्मिः ऊर्मिमान् मधुमान् मध्वादियुक्तः सरस्वान् स्वधासमुद्रः । न चैतदल्पमिति मन्तव्यं, यतः—यावानग्निश्च पृथिवी च परिमा-

नुपदस्त एवं मह्यं पितामहायाक्षितोऽनुपदस्तस्स्वधा भव तां त्वꣳ स्वधां तैस्सहोपजीव सामानि ते महिमै[16]ष ते प्रपितामह मधुमाꣳ ऊर्मिस्सरस्वान् यावानादित्यश्च द्यौश्च तावत्यस्य मात्रा तावतीं त एतां मात्रां ददामि यथाऽऽदित्योऽक्षितोऽनुपदस्त एवं मह्यं प्रपितामहायाक्षितोऽनुपदस्तस्स्वधा भव तां त्वꣳस्वधां तैस्सहोपजीव यजूꣳषि ते महिमा ॥ १९ ॥

अमुष्मै स्वाहा स्वधा स्वाहेकं च ॥ १९ ॥

---

णेन **तावत्यस्य मात्रा** परिमाणं **तावतीमेतां मात्रां ते ददामि।** अथान्नं प्रत्याह—**यथाऽग्निरक्षितः** कदाचिदप्यनूनः **अनुपदस्तः** उपक्षयरहितश्च **एवं मह्यं पित्रे** मम पित्रे **अक्षितोऽनुपदस्तश्च स्वधा भव** पितृणामन्नं भव । अथ पितरं प्रत्युच्यते—**तां स्वधां तैः** अग्न्यादिभिस्सह **त्वं उपजीव** हे पितः! यद्यपि अग्निः पृथिवी चेति द्वावेव प्रकृतौ । तथाऽपि तैरिति बहुवचननिर्देशात् आद्यर्थावगतिः । **ऋचस्ते महिमा** सर्ववेदस्थाः सर्वा ऋचः तव महत्त्वम् । एतेनोत्तरौ मन्त्रौ व्याख्यातौ ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने

द्वितीयप्रश्ने एकोनविंशः खण्डः.

[1]पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिन्लोके । [2]मार्जयन्तां मम पितरो [3]मार्जयन्तां मम पितामहा [4]मा-

---

[1]यजुषोपस्पर्शयति—**पृथिवी त इति ॥ पृथिवी ते पात्रं** भाजनं एवंनाम महदसि । पूर्वत्र चोक्तं 'यावानग्निश्च पृथिवी च'* इति । **द्यौरपिधानं** अपिधानमप्येवंप्रमाणमेव ते भवितुमर्हतीत्यर्थः । उपरिस्थितमपिधानम्, अधस्स्थितं भाजनम्, दिवः पृथिव्याश्च तादृशमवस्थानम् । **ब्रह्मणो** ब्राह्मणस्य **त्वा** त्वां **मुखे जुहोमि** । अत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे इति—

**यस्यास्येन सदाऽश्नन्ति हव्यानि त्रिदिवौकसः ।**
**कव्यानि चैव पितरः किं भूतमधिकं ततः ॥**

इति स्मृतेः† । एवं पितृणामर्थाय ब्राह्मणमुखे जुहोमीत्युक्तम् । इदानीं भुञ्जानानामपि तृप्तिरस्त्वित्याह—**ब्राह्मणानां त्वा प्राणापानयोर्जुहोम्यक्षितमसि** हे अन्न! त्वं अक्षयमसि । **एषां** पितृणां ब्राह्मणानां च **मा क्षेष्ठाः** क्षयं मा गमः **अमुत्र** परलोके पितृणां **अमुष्मिन्** इह **लोके** ब्राह्मणानां च ॥

[2—7]पिण्डदाने दर्भेष्वपो ददाति—**मार्जयन्तामिति ॥ मार्ज-**

---

†"अत एव 'यज्ञान्ते ब्राह्मणानाꣳस्तर्पयतवै' इत्यादिशन्ति सर्वेऽपि कल्पसूत्रकाराः" इत्याधिकम्. *२-१९-१४.

र्जयन्तां मम प्रपितामहा [5]मार्जयन्तां मम मातरो [6]मार्जयन्तां मम पितामह्यो [7]मार्जयन्तां मम प्रपितामह्यः* । [8]एतत्ते ततासौ ये च त्वामन्वे[9]तत्ते पितामहासौ ये च त्वामन्वे[10]तत्ते प्रपितामहासौ ये च त्वामन्वे[11]तत्ते मातरसौ याश्च त्वामन्वे[12]तत्ते पितामह्यसौ याश्च त्वामन्वे[13]तत्ते प्रपितामह्यसौ याश्च त्वामनु । [14—19]मार्जयन्तां मम पितर इत्येते* । [20]ये च वोऽत्र ये चास्मास्वाशंसन्ते [21]याश्च वोऽत्र याश्चास्मास्वाशंसन्ते [22]ते च वहन्तां [23]ताश्च वहन्तां [24]तृप्यन्तु भवन्त[25]स्तृप्यन्तु भवत्य[26]स्तृप्यंत

यन्तां अनेनोदकेन शुद्धा भवन्तु मम पितरः । एवमुत्तरे योज्याः ॥

[8—19]पिण्डदानम्—एतत्ते ततेति ॥ एतत् पिण्डं ते तुभ्यं तत ! पितः ! असौ यज्ञशर्मन् । ये च त्वामनु जीवन्ति तेभ्यश्च । एवमुत्तरे ॥

[20—26]उत्तरैरुपस्थानम्—ये चेति ॥ हे पितरः ! ये च वः युष्मान् आशंसन्ते अत्र अस्मिन्कर्मणि ये च अस्मासु अस्मान् आशंसन्ते प्रार्थयन्ते । हे मातरः ! याश्च स्त्रियः अस्मत्कुले मृताः वः युष्मान् आशंसन्ते याश्चास्मासु अस्मान् आशंसन्ते ते च पुरुषाः वहन्तां प्राप्नुवन्तु स्वधां ताश्च स्त्रियः वहन्तां

*अस्मिन्वाक्ये ममेतिपदं केचिन्नाधीयते.

तृप्यंत तृप्यंत । [27]पुत्रान्पौत्रांनभि तर्पयंन्तीरापो मधुमतीरिमाः । स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयाꣳस्तर्पयन्तु । [28]तृप्यंत तृप्यंत तृप्यंत। [29]प्राणे निविंष्टोऽमृतं जुहोमि ब्रह्मणि म आत्माऽमृतत्वार्य । [30]यां जनाः प्रतिनन्दंन्ति रात्रिं धेनुमि-

---

तृप्यन्तु भवन्तः पुरुषाः तृप्यन्तु भवत्यः स्त्रियश्च । हे पितरो! मातरश्च! उभये यूयं तृप्यत तृप्यत तृप्यत ॥

[27—28]उभयान् पिण्डान् परिषिञ्चति—पुत्रानिति ॥ पुत्रान्पौत्रांश्च अभितर्पयन्तीः अभितर्पयन्त्यः मधुमतीः मधुमत्यः मधुस्वादुयुक्ताः एवम्भूता इमा आप इत्येको वाक्यार्थः । ता आपः पितृभ्यः । 'पिता मात्रा' इत्येकशेषः । स्वधां स्वधारूपं अमृतं दुहानाः देवीः देव्यः उभयान् पितॄन् मातॄश्च तर्पयन्तु । हे पितरः! हे मातरः! तृप्यत तृप्यत तृप्यत ॥

[29]शेषप्राशनम्—प्राण इति ॥ प्राणे निविष्टः प्राणादीन् पञ्च वायून् अधिष्ठाय वर्तमानोऽहं अमृतं अमरणहेतुमन्नं जुहोमि । क्व? ब्रह्मणि परमात्मनि मे मम अमृतत्वाय आत्मा परमात्मरूपोऽहम् ॥

[30]अथाष्टकामन्त्राः । तत्र सप्तम्यां रात्रावपूपहोमः—यां जना इति ॥ यां रात्रिं जनाः प्रतिनन्दन्ति पूजयन्ति पूअपाहुत्या

**वायतीम् । संवथ्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा । [31]वह वपां जातवेदः पितृभ्यो यत्रैनान् वेत्थ निहितान्पराके । मेदसः कूल्या उप तान्क्षरन्तु सत्या एता आशिषस्सन्तु कामैस्स्वा-**

---

**धेनुमिव आयतीं** यथा दोहार्थं आगच्छन्तीं धेनुं प्रतिनन्दन्ति तद्वत् । किञ्च—**संवत्सरस्य या पत्नी** एकाष्टका नाम 'एषा वै संवत्सरस्य पत्नी यदेकाष्टका '* इत्यष्टकास्तुतिः । सप्तम्यास्तु तत्सामीप्यादेव स्तुतिः । **सा** रात्रिः **नः** अस्माकं **सुमङ्गली** शोभनमङ्गला **अस्तु** ॥

[31]श्वोभूते वपाहोममन्त्रः—**वह वपामिति** ॥ हे **जातवेदः! पितृभ्यो वपां वह** वपां पितॄन्प्रापय । **यत्र निहितान्** स्थितान् **एनान्** पितॄन् **वेत्थ** वेत्सि । **पराके** दूरे त्वया च वपायां प्राप्यमाणायां **तान्** पितॄन् **मेदसः कूल्याः उपक्षरन्तु** कृत्रिमास्सरितः कूल्याः । एषां पितॄणां **एता आशिषश्च कामैस्सह सत्यास्सन्तु** आशिषः प्रार्थनाः । कामाः तद्विषयाः काम्यन्त इति कृत्वा ॥

[32]मांसौदनमुत्तराभिः—**यां जनाः प्रतिनन्दतीत्येषेति** ॥ गता ॥

[33]**इयमेवेति** ॥ **इयमेवै**काष्टका **सा या** उषाः† **प्रथमा** आदित्यात्पूर्वं **व्यौच्छत्** व्युष्टा व्युच्छ्य च आदित्यं **प्रविष्टा अन्तरस्यां** पृथिव्यां रश्मिरूपेण **चरति** । **या** च **वधूः जजान** जायते

---

*सं. ७-४-८. †उषा.

हां । [32]यां जनाः प्रतिनन्दन्तीत्येषा । [33—35]इयमेव

भवति **नवगत्** या नवं पतिं गच्छति सा नवगत् **जनित्री** जनयित्री पुत्राणाम् । यां च **एनां महिमानः** महान्तः त्रयः अग्निरेकः अश्विनौ द्वौ **सचन्ते** भजन्ते एते वपादेवाः । 'प्रातर्यावाणो यदग्निरुषा अश्विनौ'* इति बह्वृचब्राह्मणम् । एवम्भूता या उषाः '† सेयमेवैकाष्टकेत्यर्थः ॥

[34]मध्यमस्थाना द्युस्थाना चेति द्वे उषसौ तयोरुत्तरा— **छन्दस्वती** इति ॥ **छन्दस्वती** छन्दोभिः तद्वत्यौ छन्दोभिर्ह्येते

(33)इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा । वधूर्जजान नवगज्जनित्री त्रयं एनां महिमानस्सचन्ते ॥

(34)छन्दस्वती उषसा पेपिशाने समानं योनिमनु सञ्चरन्ती । सूर्यपत्नी विचरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा ॥

(35)ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽगुः । प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम् ॥

(सं. ४-३-११.)

*ऐ. ब्रा. २-२-५, †उषा.

सा या प्र॒थमा व्यौच्छदिति॑ ति॒स्रः । [36]ए॒का॒ष्टकां

स्तूयेते **उषसा** उषसौ **पेपिशाने** दीप्यमाने **समानं** एकं **योनिं** आदित्यं **अनुसञ्चरन्ती** अनुसञ्चरन्त्यौ दिवा अनुप्रविशन्त्यौ **सूर्यपत्नी** सूर्यः पतिः पालयिता ययोस्ते सूर्यपत्न्यौ **विचरतः** विविधं चरतः **प्रजानती** प्रजानत्यौ **केतुं कृण्वाने** सर्वस्य लोकस्य प्रज्ञानं कुर्वन्त्यौ सर्व एव प्राणिनः उषस्यागतायां प्रबुध्यन्ते । **अजरे** जरारहिते **भूरिरेतसा** । द्विवचनस्याकारः । भूरिरेतसौ प्रभूतनीहारोदके ये एवम्भूते उषसौ । ते अपि इयमेवेत्यनुवर्त्य योज्यम् ॥

[35]**ऋतस्य पन्थामिति** ॥ **ऋतस्य** यज्ञस्य **पन्थां** मार्गं **तिस्रः** उषसः । कार्यभेदात्त्रित्वम् । 'एका सती बहुधोषो व्युच्छसि'* इति भविष्यति । **अन्वागुः** अन्वायन्ति । **त्रयश्च घर्मासः** । घृ क्षरणदीप्त्योः । दीप्ता अग्नय एतां उषसं **ज्योतिषा अन्वागुः** अनुयन्ति । कार्यभेदं दर्शयति—तासां मध्ये **एका देवयूनां** देवयुवो यजमानाः देवान्यष्टुमिच्छन्तीति तेषां **प्रजां रक्षति** । **एका** तु तेषामेव **ऊर्जं** बलं **रक्षति** । **एका** च तेषामेव **व्रतं** कर्म सन्ध्यावन्दनाग्निहोत्रादि **रक्षति** । एता अपि तिस्र इयमेवेति योज्यम् ॥

[36]**एकाष्टकामिति** ॥ हे ब्राह्मणाः ! इमां **एकाष्टकां** पश्यत कीदृशीं ? पितृभ्योऽन्नं **दोहमानाम्** । कीदृशमन्नं ? **मांसवत्**

*सं. ४-३-११.

पश्यत दोहमानामन्नं मासवन्द्धृतवत्स्वधावत् । तद्ब्राह्मणैरतिपूतमनन्तमक्षय्यममुष्मिँल्लोके स्फीतिं गच्छतु मे पितृभ्यस्स्वाहा । [37]औलूखला ग्रावाणो घोषमक्रत हविः कृण्वन्तः परिवत्सरीणम् । एकाष्टके सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम् । [38]एकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी दुदुहे प्रपीना । तं दोहमुपजीवाथ पित-

घृतवत् स्वधावच्च पितृणामेव यद्योग्यं मांसादि* तेन तद्वत्, तत् अन्नं ब्राह्मणैरतिपूतं अतीव शोधितं अनन्तं अक्षय्यं क्षपयितुमशक्यं अमुष्मिन् लोके मे मम पितृभ्यः स्फीतिं वृद्धिं गच्छतु ॥

[37]औलूखला इति ॥ स्वार्थिकः तद्धितः उलूखलाः ग्रावाणश्च पेषण्याद्याः घोषमक्रत शब्दं कुर्वन्ति हविः कृण्वन्तः अवघातपेषणादि† द्वारेण हविः कुर्वन्तः परिवत्सरीणं वत्सरेवत्सरे भवम् । हे एकाष्टके ! सुप्रजाः । वचनव्यत्ययः । सुप्रजसः वीरवन्तः वीरैश्शूरैश्च ‡ तद्वन्तो भूत्वा वयं रयीणां पतयः स्याम त्वत्प्रसादात् ॥

[38]एकाष्टकेति ॥ इयमेकाष्टका तपसा तप्यमाना संवत्सरस्य पत्नी पालयित्री दुदुहे दुग्धे प्रपीना प्रवृद्धा । तं दोहं

*माषादि. †अवघातमरीचपेषणादि. ‡वीरैः पौत्रैश्च.

रंस्सहस्रंधारममुष्मिन्लोके स्वाहा ॥ २० ॥

आयतीं प्रपीनैकं च ॥ २० ॥

[1]उक्थ्यंश्चास्यंतिरात्रश्च साद्यंस्क्रीश्छन्दंसा सह।
अपूपघृताहुते नमंस्ते अस्तु माःसपिप्पले स्वाहा।

---

हे पितरः! यूयं **उपजीवाथ** उपजीवत **सहस्रधारममुष्मिन् लोके** परलोके ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने विंशः खण्डः.

---

[1]पिष्टान्नमुत्तरया जुहोति—**उक्थ्यश्चेति** ॥ हे एकाष्टके! त्वमेव **उक्थ्यश्चासि अतिरात्रश्च साद्यस्क्रीः** साद्यस्क्रोनाम * क्रतुः, तस्य छान्दस ईकारः। **छन्दसा सह**, छन्दश्शब्दैकदेशेन छन्दोमा उच्यन्ते । अपूपानां घृतस्य च आहुतिर्यस्याः तस्या आमन्त्रणम् । हे **अपूपघृताहुते! नमस्ते अस्तु मांसपिप्पले!** स्वादु फलं पिप्पलं 'तयोरन्यः पिप्पलं स्वाद्वत्ति'+ इति दर्शनात् । मांसमेव पिप्पलं यस्याः तस्या आमन्त्रणं हे मांसपिप्पले! ॥

[2—4]आज्याहुतीरुत्तराः—**भूः पृथिवीति** ॥ भूरादिव्याहृतयः उच्चारणमात्रेणोपकारकाः, न पदान्तरैः संहत्यार्थमभिदधति । **पृ-**

---

*सद्यस्क्रोनाम.

+मुण्ड. ३-१-१.

[2]भूः पृथिव्याग्निनर्चाऽमुं मयि कामं नियुनज्मि स्वाहा । [3]भुवो वायुनाऽन्तरिक्षेण साम्नाऽमुं मयि कामं नियुनज्मि स्वाहा । [4]स्वर्दिवाऽऽदित्येन यजुषाऽमुं मयि कामं नियुनज्मि स्वाहा । [5]जनदद्भिरथर्वाङ्गिरोभिरमुं मयि कामं नियुनज्मि स्वाहा । [6]रोचनायाजिरायाग्नये देवजातवे स्वाहा । [7]केतवे मनवे ब्रह्मणे देवजातवे स्वाहा । [8]स्वधा स्वाहा [9]ऽग्नये कव्यवाहनाय

थिवी । तृतीयैकवचनस्य पूर्वसवर्णः । पृथिव्या लोकेन **अग्निना** देवेन **ऋचा** वेदेन एतैः कारणभूतैः **अमुं** हृदि स्थितं **कामं मयि नियुनज्मि** स्थापयामि । एतेनोत्तरे व्याख्याताः ॥

[5]**जनदद्भिरिति** ॥ जनदिति चतुर्थी व्याहृतिरथर्ववेदे पठिता । जनत् अद्भिरिति पदच्छेदः । नारायणानुवाके तु 'जनः'* इति विसर्जनीयान्तं पठ्यते ॥

[6—7]**रोचनायेति** ॥ **रोचनाय** दीप्ताय **अजिराय** । अज गतिक्षेपणयोः गमनस्वभावाय क्षेप्त्रे वा तमसाम्, एवम्भूताय **अग्नये देवजातवे** देवानां यष्टव्यानां ज्ञात्रे **केतवे** ज्ञात्रे **मनवे** मन्त्रे मनुनाम्ने वा ऋषये **ब्रह्मणे** ब्रह्मरूपाय ब्राह्मणानां वा योनिभूताय । 'आग्नेयो वै ब्राह्मणः'† इति ॥

[8—9]**स्वधेति** ॥ स्वधादयो गताः ॥

*याज्ञिकी. २७-(३४). †सं. २-१-२.

स्वधा स्वाहा। [10]अन्नमिव ते दृशे भूयासं [11]वस्त्रमिव ते दृशे भूयासं [12]वित्तमिव ते दृशे भूयास [13]माशेव ते दृशे भूयासꣳ [14]श्रद्धेव ते दृशे भूयासꣳ [15]सꣳ स्रवन्तु दिशो महीस्समाधावन्तु सूनृताः। सर्वे कामा अभियन्तु मा प्रिया अभिरक्षन्तु मा प्रियाः। [16]य-

---

[10–14]सनिमित्वोत्तरां जपेत्—**अन्नमिवेति** ॥ **अन्नमिव ते दृशे** दृष्टयोः **भूयासं** अन्ने दृष्टे यादृशी प्रीतिः तथा ते मयि भवतु। दातारं प्रत्यात्मनि वचनमेतत्। एवमुत्तरेष्वपि योज्यम्। **आशा** मनोरथः ॥

[15]**संस्रवन्त्विति** ॥ **संस्रवन्तु** संगत्य स्रवन्तु **दिशो महीः** महत्यः सर्वासु दिक्षु तव यद्देयं तन्मामागच्छतु **समाधावन्तु सूनृताः** प्रिया वाचः स्वागतमित्येवमादयः। **सर्वे कामाः प्रियाः मामभियन्तु** अभिगच्छन्तु। **अभिरक्षन्तु मा प्रियाः** स एवार्थः। आदरार्थं पुनर्वचनम् ॥

[16]**यशोसीति** ॥ **यशोसि** यशस्व्यसि **अहं च त्वयि यशो भूयासम्** यशस्वी भूयासं त्वं मे देहीत्यर्थः। एवं हि याचितुर्यशो भवति। **असाविति** दातुर्नामनिर्देशः संबुद्ध्या। हे यज्ञशर्मन्! इति ॥

[17]रथे लब्धे तस्य चक्रे पक्षसी वा अभिमृशति—**अङ्काविति** ॥ **ध्वान्तं**। ध्वन शब्दे, छान्दस इडभावः। ध्वनितं **वाताग्रम्**।

शों॒ऽसि य॒शो॒ऽहं त्वयिं भूयासमसौ । [17]अ॒ङ्कौ न्य॒ङ्कावभित॒ इत्ये॒षा । [18]अध्वंनामध्वपते स्व॒स्ति म॒ा संपारय । [19]अ॒यं वाम॒श्विन॒ा र॒थो मा दुःखे मा सु॒खे रिंषत् । अरिंष्टस्स्व॒स्ति गंच्छतु विवि॒घ्नन्पृतं-

---

अग्निर्गत्यर्थः । वातवत् गन्तारं एवंभूतं रथं अभितः अनुसञ्चरन्तौ यौ अङ्कौ एवंनामानौ भूतविशेषौ तथा न्यङ्कौ यश्च दूरेहेतिः एवंनामा भूतविशेषः यश्च इन्द्रियावान् बलवान् पतत्री पतनशीलः एते भूतविशेषाः रथस्याधिष्ठातारः ते अग्नयः । अग्निर्गत्यर्थः । गन्तारो रथेन सह । पप्रयः, प्रा पूरणे, कामानां पूरयितारः नः अस्मान् पारयन्तु पारं नयन्तु इष्टदेशं प्रापयन्तु ॥

[18]यजुषाऽधिरोहति—अध्वनामिति ॥ हे रथ! अध्वनामध्वपते अध्वपत इत्येवार्थः । यथा गवां गोपतिरिति । स्वस्ति यथा तथा मा मां संपारय सम्यक्पारं नय ॥

[19]उत्तरयाऽभिप्रयाति—अयमिति ॥ हे आश्विना! अश्विनौ! अयं रथः वां युवयोः स्वभूतः, ततश्च दुःखे सुखे वा अध्वनि मा रिषत् भग्नो मा भूत् । अरिष्ट एव स्वस्ति गच्छतु । विविघ्नन् । छान्दसं विशब्दस्य द्विर्वचनम् । विविधं घ्नन् कान्? पृतनायतः योद्धुकामान् ॥

---

(17) अ॒ङ्कौ न्य॒ङ्काव॒भित॒ो र॒थं यौ ध्व॒ान्तं वा॑ता॒ग्रमनु॒ सं॒चरं॑न्तौ दू॒रेहे॑तिरिन्द्रि॒यावा॑न्पत॒त्री ते नो॒ऽग्नय॒ः पप्र॑यः पारयन्तु ॥ (सं. १-७-७.)

**नायतः । [20]अश्वोसि हयोस्यत्योसि नरोस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामास्यादित्यानां पत्वाऽन्विहि । [21]हस्तियशसमसि हस्तियशसी भूयासं वहं कालवह श्रियं माऽभि-**

[20]अश्वे लब्धे आरोहणमन्त्रः—**अश्वोऽसीति** ॥ अश्नुतेऽध्वानमिति **अश्वः** । हिनोति हयतीति वा **हयः** । हि गतौ, हय गतौ, गमनशीलः । अत सातत्य गमने, तस्मात् **अत्यः** । नृत्यतेः **नरः*** । अर्तेः **अर्वा** । सर्पतेः **सप्तिः** । वज गतौ, तस्मात् **वाजी** । वर्षतेः **वृषा** सेचनसमर्थः । नृषु शत्रुषु मनुष्येषु मनो यस्य हन्मीति स **नृमणाः** । यातेः **ययुः** अश्वमेधाश्वः । **नाम** प्रसिद्धौ । **आदित्यानां** अदितेः पुत्राणां देवानां **पत्वा** पतनशीलः एवम्भूतः स त्वं मां **अन्विहि** अनुगच्छ । मा मां व्यतिक्रमीः ॥

[21]हस्तिनि लब्धे आरोहणमन्त्रः—**हस्तियशसमसीति** ॥ **हस्तियशसमसि** हस्तिनां त्वं यशोभूतोसि । अहं च त्वया **हस्तियशसी भूयासम्** । **वह** प्रापय मां हे **कालवह**! कालस्कन्धवह! **मा** मां **श्रियमभिवह** श्रियं प्रापय । **इन्द्रस्य वज्रेण** तत्सदृशेनाङ्कुशेन **त्वा** त्वां **अभिनिदधामि** बध्नामि एवम्भूतमङ्कुशं तव मस्तके स्थापयामीत्यर्थः । **असौ** हे ऐरावत! सुप्रतीक! † ॥

*नरतेर्नरः †ताभ्यां रेषणे पूर्ववत्पृथिवीमभिमृशेत्—स्योना पृथिवीति ॥ गतम् ॥ इत्यधिकपाठः.

वंह । इन्द्रंस्य त्वा वज्रेणाभि निदंधाम्यसौ । [22]अवं जिह्वक निजिह्वकावं त्वा हविषां यजे । तथ्सत्यं यदुहं ब्रवीम्यधंरो मदसौ वंदाथ्स्वाहां । [23]आ ते वाचंमास्यां ददु आ मंनुस्याः हृदंयादधिं । यत्रंयत्र ते वाङ्निहिंता तां तु आदंदे । तथ्सत्यं यदुहं ब्रवीम्यधंरो मत्पंद्यस्वासौ ॥ २१ ॥

सूनृतां हविषां यजे चत्वारिं च ॥ २१ ॥

---

[22]संवादमेष्यन् फलीकरणमुष्टिं जुहोति—**अवजिह्वकेति** ॥ अवाचीना जिह्वा यस्य तस्यामन्त्रणम्, हे **अवजिह्वक**! एवं न्यग्भूता जिह्वा यस्य स निजिह्वकः, हे **निजिह्वक**! त्वा त्वां अहं **हविषा** अनेन फलीकरणमुष्टिरूपेण **अवयजे** यथा त्वमवाचीनो भवसि तथा यजे । **तत्सत्यं** अस्तु **यदहं ब्रवीमि** । किं पुनस्तत्? **असौ** यज्ञशर्मा मत्प्रतियोगी मत् मत्तः **अधरो** भूत्वा **वदात्** वदेत् ॥

[23]प्रतियोगिसन्निधौ जपः—**आ त** इति ॥ ते तव **वाचं आस्यां** आस्ये भवां **आददे**, **मनस्यां** मनसि भवां मनसा विवक्षितां च वाचमाददे, **हृदयादधि** हृदयस्योपरि या वाक् तां चाददे । अन्यत्रापि **यत्रयत्र ते वाङ्निहिता तां ते** तव स्वभूतां **आददे** । **तत्सत्यमस्तु यदहं ब्रवीमि** । किं पुनस्तत्? हे **असौ** यज्ञशर्मन्! मत् मत्तः त्वं **अधरः पद्यस्व** पराभूतो भव विपन्नो वा भवेत्यर्थः ॥

इति श्रीहरदत्तविरचिते एकाग्निकाण्डव्याख्याने
द्वितीयप्रश्ने एकविंशः खण्डः ॥

[1]या ते एषा रराट्या तनूर्मन्योर्मृध्रस्य नाशिनी । तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः । [2]यत्त एतन्मुखेऽमतꣳ रराटमुदिव विध्यति । वि ते क्रोधं नयामसि गर्भमश्वतर्या इव । [3]अव ज्यामिव धन्व-

---

[1]यस्य क्रोधमपनेतुकामः तमुत्तराभ्यामभिमन्त्रयते—**या त इति** ॥ **या ते एषा रराट्या** ललाटे भवा **मन्योः तनूः** क्रोधस्य वेषः भ्रुकुट्यादिः **मृध्रस्य** । मृदुनामैतत्, भावप्रधानं च । मृदुत्वस्य **नाशिनी** क्रुद्धो हि मृदुत्वं जहाति । **तां** मन्योस्तनूं **देवाः ब्रह्मचारिणः** ब्रह्मणि मन्त्रे प्रतिपाद्यत्वेन चरन्तः **विनयन्तु** अपनयन्तु **सुमेधसः** सुप्रज्ञाः ॥

[2]**यत्त इति** ॥ **यदेतत् ते** तव **मुखे अमतं** सतामसंमतं **रराटमुद्विध्यतीव**, क्रुद्धस्य यद्भ्रुवोस्स्पन्दनं ललाटे नाडीनां च स्फुरणं तदभिप्रायमेतत् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तं ते **क्रोधं विनयामसि** विनयामः **गर्भमश्वतर्या इव** अश्वतरीणां गर्भग्रहणं मरणहेतुः । अतो विनेतव्यस्स भवति ॥

[3]असम्भवेप्सुः परेषां स्थूलाढारिकाजीवचूर्णानि कारयित्वोत्तरया सुप्तायास्संबाध उपवपेत्—**अव ज्यामिवेति** ॥ हे स्त्रि ! ते तव **हृदो** हृदयात् **मन्युं**, मन्युशब्देनात्र चित्तविकारसाम्यात्कामो लक्ष्यते । कामं परपुरुषविषयं **अवतनोमि** अवततं करोमि अपनयामि

नो हृदो मन्युं तनोमि ते । इन्द्रापास्य पलिगमन्येभ्यः पुरुषेभ्योऽन्यत्र मत् । [4]यदहं धनेन प्रपणञ्चरामि धनेन देवा धनमिच्छमानः । तस्मिन्त्सोमो रुचमादधात्वग्निरिन्द्रो बृहस्पतिश्च स्वाहा । [5]परि त्वा गिरेरमिहं परि भ्रातुः परिष्वसुः । परि

ज्यामिव धन्वनः यथा धनुः कार्यायोग्यं चिकीर्षन्तोऽवततज्यं कुर्वन्ति तद्वत् । हे इन्द्र ! त्वमपि अस्याः पलिगं उपस्थेन्द्रियं अन्येभ्यः पुरुषेभ्यः अपास्य अपनय यथा ते न प्रविशन्ति तथा कुरु । कुतोऽन्येभ्य इत्यपेक्षायामुच्यते—अन्यत्र मत् । पञ्चम्यन्तात् त्रल् । मत्तोऽन्येभ्यः ॥

[4]सिद्ध्यर्थे यदस्य गृहे पण्यं स्यात् तत उत्तरया जुहुयात्—यदहमिति ॥ हे देवाः ! धनेन धनं मूल्यभूतं इच्छमानोऽहं यत् । तृतीयाया लुक् । येन धनेन प्रपणन् व्यवहरन् चरामि । तस्मिन् पण्ये सोमो रुचमादधातु अग्न्यादयश्च, यथा तत् क्षिप्रं विक्रीतं भवति ॥

[5]यं कामयेत नायमच्छिद्येतेति जीवविषाणे स्वमूत्रमानीय सुप्तमुत्तराभ्यां त्रिः प्रसव्यं परिषिञ्चेत्—परि त्वेति ॥ हे भृत्य !* त्वा त्वां अहं पर्यमिहम् । मिह सेचने । मूत्रेण परिषिञ्चामि गिरेः । पञ्चमीश्रुतेरर्वागिति गम्यते । गिरेरर्वाक् । गिरिग्रहणं

* हे भर्तः !

सर्वेभ्यो ज्ञातिभ्यः परिषीतः क्वैष्यसि। [6]शश्वत्परिकुपितेन संक्रामेणाविच्छिदा। उलेन परिषीतोसि परिषीतोस्युलेनं। [7]आवर्तन वर्तयेत्येषा। [8]आवर्तने नि-

देशान्तरोपलक्षणम्। तव देशान्तरप्राप्तेरर्वागित्यर्थः। एवं **परिभ्रातुः परिष्वसुः परिसर्वेभ्यो ज्ञातिभ्यः** भ्रात्रादिसमीपगमनादर्वागित्यर्थः। एवं मया **परिषीतः**। छान्दसं दीर्घत्वम्। परिषितः सूत्रेण परितो बद्धः त्वं क्व **एष्यसि** छान्दसं पररूपत्वम्। न त्वया क्वापि गन्तुं शक्यमित्यर्थः॥

[6]**शश्वदिति** ॥ **शश्वत्** दीर्घकालं परिषीतोऽसीत्यनेन सम्बन्धः। **परिकुपितेन** तवापसरणशङ्कया परिकुपितेन मया **संक्रामेण** भूमौ संक्रान्तेन **अविच्छिदा** अविच्छिन्नेन **उलेन** उलाः स्थूलाः पिपीलिकाः। जातावेकवचनम्। उलानां पङ्क्तिसदृशेन सूत्रेण **परिषीतोसि** परितो बद्धोसि **परिषीतोऽस्युलेन**। दृढार्थं * पुनर्वचनम्॥

[7–8]येन पथा दासकर्मकराः पलायेरन् तस्मिन्निण्वान्युपसमाधायोत्तरा आहुतीर्जुहुयात्—**आवर्तनेति** ॥ प्रत्यागमनमावृत्तिः। गमनादुपरतिर्निवृत्तिः। आवर्तयतीति आवर्तनः। निवर्तयतीति नि-

[(7)]**आवर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद।**
**भूम्याश्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः॥**
(सं. ३-३-१०)

* आदरार्थम्.

वर्तन आवर्तननिवर्तनाय स्वाहा। [9]अनु पोऽह्वदनुह्वयो निवर्तो पो न्यवीवृतत्। ऐन्द्रः परिक्रोशो वः परिक्रोशतु सर्वतः। [10]यदि मामति मन्याध्वा अदेवा देवव-

वर्तनः। आङ आख्यातेन सम्बन्धः। अन्य आङध्याहर्तव्यः। हे **आवर्तन! आवर्तय** मदीयान् भृत्यान्। हे **निवर्तन! निवर्तय** तानेव। हे **इन्द्र! नर्दबुद!** नर्द इति शब्दार्थः। बुद इति शरनाम। 'आबुन्दं वृत्रहाऽऽददे'[1] 'इन्द्रो बुन्दम्'[2] 'तुविक्षन्ते सुकृतं सुमयं धनुस्साधुर्बुन्दो हिरण्मयः'[3] इति दर्शनात्। शब्दितशर! प्रसिद्धशर इत्यर्थः। **भूम्याः** सम्बन्धिन्यः **चतस्रः प्रदिशः** प्रधानदिशः प्राच्याद्याः **ताभिः**। विभक्तिव्यत्ययः। ताभ्यः **पुनरावर्तय**। येन पथा आवर्तते स **आवर्तनः**। यस्मिन्नेव निवर्तते स **निवर्तनः**। **आवर्तननिवर्तनाय** तुभ्यं **स्वाहा**॥

[9]अनु पोऽह्वदिति॥ **पः**। युष्मदादेशस्य वसो वकारस्य छान्दसः पकारः। वः युष्मान् **अन्वह्वत्** अनुह्वयतु पृष्ठतः स्थित्वा आगच्छतेति ब्रवीतु प्रतिकूलं हि तद्गमने **अनुह्वयः** अनुह्वाता पुरुषः। निवर्तयतीति **निवर्तः** सोपि **पः** वः **न्यवीवृतत्** निवर्तयतु। **ऐन्द्रः** इन्द्रसम्बन्धी देवकृत इत्यर्थः। **परिक्रोशः** निषेधशब्दः गच्छतां प्रतिकूलशब्दः वः युष्मान् **सर्वतः परिक्रोशतु** निषेधतु॥

1—2—3 ऋक्सं. ८-४५-४, ८-७७-६, ८-७७-११.

त्तरम् । इन्द्रः पाशेन सिक्त्वा वो मह्यमिद्वशमानं- याथ्स्वाहा । [11]यदि वृक्षाद्यद्यन्तरिक्षात्फलमभ्यपत- त्तदु वायुरेव । यत्रास्पृक्षत्तनुवं यत्र वास आपो बाधन्तां निरृतिं पराचैः । [12]ये पक्षिणः पतय- न्ति बिभ्यतो निरृतैस्सह । ते मा शिवेन श-

---

[10]यदीति ॥ यदि यूयं मामति मन्याध्वै अतिक्रम्य मन्य- ध्वं अदेवाः देवरहिताः देववत्तरं अतिशयेन देववन्तं मां य- द्यतिमन्यध्वं तत इन्द्रः पाशेन वः युष्मान् सिक्त्वा । षिञ् बन्धने । ककार उपजनः । सित्वा बध्वा मह्यमित् ममैव वशं आन- यात् आनयतु ॥

[11]यद्येनं वृक्षात् फलमभिनिपतेत् तदङ्गं प्रक्षालयति—यदीति ॥ यदि वृक्षात् यदि वाऽन्तरिक्षात् फलमभ्यपतत् ममोपरि, तत् वायुरेव । उकारोऽनर्थकः । वायुवशेनैव तदापन्नं न दुर्निमित्त- मित्यर्थः । तच्च फलं यत्र प्रदेशे मम तनुवं शरीरं अस्पृ- क्षत् । वासः वस्त्रं वा यत्रास्पृक्षत् । यच्छब्दश्रवणात् त- च्छब्दोऽध्याहार्यः । ततः प्रदेशात् निरृतिं तन्निमित्तां कृ- च्छ्रापत्तिं पराचैः पराङ्मुखीं आपः प्रक्षालनसाधनभूताः बाध- न्तां अपनुदन्ताम् ॥

[12]वयो वाऽभिविक्षिपेत्—य इति ॥ ये विभक्तिव्यत्ययः । यत्र प्रदेशे पक्षिणः पतयन्ति पतन्ति बिभ्यतो मा ममोपरि निरृ-

ग्मेन तेजसोन्दन्तु वर्चसा । [13]दिवो नु मां बृहतो अन्तरिक्षादपाः स्तोको अभ्यपतच्छिवेन । सम- हमिन्द्रियेण मनसाऽहमागां ब्रह्मणा संपृचानस्सु- कृता कृतेन । [14]इमं मे वरुण [15]तत्त्वा यामि [16]त्वं नो अग्ने [17]स त्वं नो अग्ने [18]त्वमग्ने अयाऽसि [19]प्रजा-

तैः अमङ्गलैः सह । ते तं प्रदेशं शिवेन शान्तेन शग्मेन सुखेन तेजसोन्दन्तु क्लेदयन्तु वर्चसा च इमा आपः ॥

[13]अवर्षतर्के वा बिन्दुरभिनिपतेत्—दिवो न्विति ॥ दिवो वा बृहतोऽन्तरिक्षाद्वा अयं अपां स्तोको बिन्दुः मां अभ्यपतत् ममोपरि पतति, तत्र शिवेन अहमिन्द्रियेण मनसा च समागां संङ्गच्छेयं एतन्निबन्धनं दुर्निमित्तं इन्द्रियाणां बुद्धेर्मा भूत् । ब्रह्म- णा मन्त्रेण संपृचानः अद्भिरात्मानं संसृजन् सुकृता सुष्ठु कार्यं करोतीति सुकृत् तेन ब्रह्मणा कृतेन मया प्रयुक्तेन ॥

[14—18]अगारस्थूणाविरोहणादिषु होममन्त्राः—इमं मे वरुणे- त्यादयः पञ्च गताः ॥

(14—18)एते मन्त्राः (२२–२४) पुटेषु लिखिताः.

(19)प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥

(स. १-८-१४.)

पते । [20]सम्राजं च [21—23]व्याहृतीर्विहृताः । [24]इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दधतां पर्वतेन ॥ २२ ॥

**क्वेष्यसि पराचैरष्टौ च ॥ २२ ॥**

---

[19]प्रजापत इति ॥ हे **प्रजापते!** **त्वत्** त्वत्तः **अन्यः एतानि** **विश्वा** विश्वानि **जातानि** जनिमन्ति वस्तूनि कश्चिदपि **न परिबभूव** । परिपूर्वो भवतिः परिग्रहे वर्तते । वर्तमाने लट्, परिगृह्णाति । न त्वदन्यः परिग्रहीतुं समर्थ इत्यर्थः । **ता** तान्येतानि प्रसिद्धानि भुवनादीनीत्यर्थः । **यत्कामा** यं कामयमाना वयं **ते** तुभ्यं **जुहुमः** **तन्नः** अस्माकं **अस्तु** संपद्यताम् । किं पुनस्तत्? **वयं रयीणां पतयः स्याम** ॥

[20]**सम्राजं चेति** गतम् ॥

[21—23]**व्याहृतयश्च** गताः ॥*

[24]अभिमृतेभ्यः उत्तरया दक्षिणतोऽश्मानं परिधिं दधाति— **इमं जीवेभ्य इति** ॥ **इमं** अश्मानं **जीवेभ्यः** जीवतामर्थाय **परिधिं** परिधीयते मृत्युस्तिरोधीयते येन तं परिधिं अश्मानं **दधामि** स्थापयामि । **नः एषां** जीवतां मध्ये कश्चिदपि **अपरो** बालः **एतमर्धम्** । छान्दसो धकारः । एतमर्थं मृत्युलक्षणं **मा गात्** मा गमत् **नु** क्षिप्रमकाल एव । ततश्च **शतं शरदः पुरूचीः** बहून् दिवसान् व्याप्नुवतीः **जीवन्तु । मृत्युं** अनेन **पर्वतेन** अश्मना **तिरोदधतां** तिरोहितं कुर्वन्तु ॥

---

(20) अयं मन्त्रः (११३) पृष्ठे लिखितः. *१-१०-१०.

उष्णेन पञ्चदशायुर्दा एकविंशतिरागन्त्रा दश योगेयोगे त्रयोदश सुश्रवस्सुश्रवसगष्टौ परि त्वाऽग्न इमꣳ स्तोममायुष्यमेकान्न विंशतिरेकान्न विंशतिर्मयि पर्वतपूरुषꣳ षोडश त्रयी विद्यायां अष्टादश धाता ददातु नो रयिमेकविंशतिरश्मा भव षोडश मा ते कुमारं त्रयोविंशतिर्नक्तंचारिणश्चतुर्दश यद्भूम्रेष्षड्विंशतिः कूर्कुरः पञ्चविंशतिरिन्द्र जहि द्वाविंशतिः परमेष्ठ्यासि परमामष्टौ यन्मे माता पृथिवी ते पात्रमेकविंशतिरेकविंशतिरुक्थ्यंश्च त्रयोविंशतिर्या त एषाऽष्टाविंशतिर्द्वाविंशतिः ॥ २२ ॥

उष्णेन धातोक्थ्यंश्च द्वाविंशतिः ॥ २२ ॥

उष्णेन पर्वतेन.

हरिः ओम्.

एकाग्निकाण्डस्समाप्तः.

---

इति श्रीपदवाक्यप्रमाणज्ञमहामहोपाध्यायहरदत्तमिश्रविरचितायां एकाग्निकाण्डमन्त्रव्याख्यायां द्वितीयप्रश्ने द्वाविंशः खण्डः.

प्रश्नश्च समाप्तः.

सम्पूर्णा चैकाग्निकाण्डमन्त्रव्याख्या.

ओम्. शम्.

# अशुद्धशोधनपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १५ | २ | मप्य | मस्य |
| २० | ,, | यथेयः | यथेयङ्ः |
| २८ | १ | लोक | लोके |
| ५० | ३ | ऋशांश्च | रुशांश्च |
| ५३ | २ | अदुर्मङ्गलीः | अदुर्मङ्गलीः |
| ५४ | ४ | बऋहस्व | बरुहस्व |
| ८३ | ,, | शतायुंषं | शतायुंषं |
| ९७ | ८ | स्कस्य | स्कस्यं । |
| १०९ | ३ | इयमोषंधे | इयमोषंधे |
| १४९ | ,, | न्त्वसौ । | न्त्वसौ |
| १५७ | ४ | धावंति । स | धावंति स |
| १६९ | ९ | वस्सगुरो वांत | वस्सगंरो वात |
| १८० | ,, | तावंस्यस्य | तावंत्यस्य |
| १८१ | १ | एवं | एवं |
| १९० | ४–५ | ङ्गिरोभि | ङ्गिरोभिं |

| | | | |
|---|---|---|---|
| ४ | १,६ | प्रसुग्मन्ताः | प्रसुग्मन्ता |
| ४२ | ५ | रेतसः | रेतस |
| ८७ | १२ | अन्तर्हीत | अन्तर्नीत |
| १९१ | १ | त्वोत्तरां | त्वोत्तरा |



# मन्त्रप्रतीकसूचिनी.



| मन्त्रप्रतीकसूचिनी. | प्र | ख. | म. |
|---|---|---|---|
| **म** | | | |

| मन्त्रप्रतीकसूचिनी. | प्र | ख. | म. |
|---|---|---|---|
| मा हास्महि प्रजया .. .. .. | २ | ९ | १० |
| मित्रश्च वरुणश्च .. .. | २ | १५ | ९ |
| मित्रस्ते हस्तमग्रभीत् .. .. .. | २ | ३ | ११ |
| मित्रत्वमसि धर्मणा ... .. ... | २ | ३ | १२ |
| मित्रस्य चक्षुर्धरुणम् ... . .. | २ | २ | ११ |
| मिश्रवाससः कौबेरकाः ... .. | २ | १३ | ११ |
| मृत्यवे त्वा परि ददामि ... .. | २ | ३ | १७ |
| मेधां ते देवस्सविता ... .. .. | २ | १२ | २ |
| मेधां मह्यमङ्गिरसः .. .. ... | २ | ४ | ५ |
| मेहनाद्वलङ्करणात् ... .. ... | १ | १८ | ५ |

**य**

| मन्त्रप्रतीकसूचिनी. | प्र | ख. | म. |
|---|---|---|---|
| य एति प्रदिशस्सर्वाः .. .. .. | १ | ३ | ६ |
| यज्ञ आयुष्मान्थ्सः .. .. .. | २ | १४ | ७ |
| यज्ञश्च दक्षिणाश्च ... .. .. | २ | १५ | ७ |
| यज्ञो वर्धताम् .. ... ... | २ | १० | ८ |
| यत् क्षुरेण मर्चयता .. .. ... | २ | १ | ७ |
| यत् क्षुरेण मर्चयता .. .. .. | २ | ७ | १० |
| यत्त एतन्मुखेऽमतम् ... .. .. | २ | २२ | २ |
| यत्ते सुसीमे हृदयम् .. ... ... | २ | १३ | ४ |
| यथा पृथिव्यग्निगर्भा ... .. .. | १ | १३ | ६ |
| यथेयं पृथिवी ... .. ... | १ | १३ | ४ |
| यथैव सोमः पवते ... .. ... | २ | ११ | १६ |
| यदहं धनेन प्रपणन् .. .. ... | २ | २२ | ४ |
| यदाञ्जनं त्रैककुदम् ... ... . | २ | ८ | ११ |
| यदि मामति मन्याध्वै ... .. ... | २ | २२ | १० |
| यदि वृक्षाद्यद्यन्तरिक्षात् ... ... ... | २ | २२ | ११ |

| मन्त्रप्रतीकसूचिनी. | प्र | ख | म |
|---|---|---|---|
| यद्वते चिदभिश्रिषः | १ | ७ | ४ |
| यद्ब्राह्मणानां ब्रह्मणि | २ | ९ | १० |
| यद्भूमेः क्रूरम् | २ | १९ | १ |
| यद्भूमेर्हृदयम् | २ | १३ | ३ |
| यन्मधुनो मधव्यम् | २ | १० | ५ |
| यन्मे पितामही प्रलुलोभ | २ | १९ | ३ |
| यन्मे प्रपितामही प्रलुलोभ | २ | १९ | ५ |
| यन्मे माता प्रलुलोभ | २ | १९ | १ |
| यन्मे वर्चः परागतम् | २ | ९ | ५ |
| यमाय त्वा परि ददामि | २ | ३ | १८ |
| यशोऽसि यशोऽहम् | २ | २१ | १६ |
| यस्ते अद्य कृणवद्भद्र | २ | ११ | २८ |
| यस्त्वा हृदा कीरिणा | २ | ११ | ५ |
| यस्मिन् भूतं च भव्यं च | २ | ५ | १३ |
| यस्मै त्वं सुकृते | २ | ११ | ६ |
| यस्य ते प्रथमवास्यम् | २ | ६ | १५ |
| यां जनाः प्रति नन्दन्ति | २ | २० | ३० |
| यां जनाः प्रति नन्दन्ति | २ | २० | ३२ |
| या अकृन्तन्नवयन् | २ | २ | ५ |
| या अकृन्तन्नवयन् | २ | ७ | २९ |
| या आख्याता याश्च | २ | १८ | ४१ |
| या इषवो यातुधानानाम् | २ | १७ | ७ |
| या ओषधयः | १ | ७ | १२ |
| या त एषा रराट्या | २ | २२ | १ |
| या तिरश्ची निपद्यसे | २ | ८ | ५ |
| या दैवीश्चतस्रः प्रदिशः | २ | १२ | ८ |
| यानि भद्राणि बीजानि | १ | १४ | ३ |

| मन्त्रप्रतीकसूचिनी. | प्र | ख. | म. |
|---|---|---|---|
| शुभिके शिर आरोह .. ... ... | २ | ८ | ९ |
| श्रद्धा च मेऽश्रद्धा च मे .. .. | २ | ५ | ४ |
| श्रद्धेव ते दृशे भूयासम् ... . | २ | २१ | १४ |
| श्रीगाम्रुदारो धरुणः .. ... ... | २ | ११ | २७ |
| श्रीस्ते स्तूपः ... ... .. | २ | १९ | ११ |
| श्रुतं च मेऽश्रुतं च मे .. .. | २ | ५ | ६ |
| श्वासिन उपस्पृशत .. ... .. | २ | १८ | ३६ |

## ष

| | | | |
|---|---|---|---|
| षड्तुभ्यः .. .. . | १ | ३ | १२ |

## स

| | | | |
|---|---|---|---|
| संकाशयामि वहतुम् .. .. .. | १ | ७ | १३ |
| सं माऽग्ने वर्चसा सृज .. .. .. | २ | ६ | ७ |
| संराजं च विराजं च .. .. .. | २ | ८ | ८ |
| संराजं च विराजं च .. ... . | २ | २२ | २० |
| संराज्ञी श्वशुरे भव ... .. ... | १ | ६ | ६ |
| संराधन्यै देव्यै ... .. .. | २ | ८ | ६ |
| संस्रवन्तु दिशो महीः .. .. | २ | २१ | १५ |
| सखा सप्तपदा भव ... .. ... | १ | ३ | १४ |
| सत्यं च मेऽनृतं च मे .. ... | २ | ५ | ७ |
| सत्येनोत्तभिता भूमिः .. .. ... | १ | ६ | १ |
| स त्वं नो अग्नेऽवमः ... .. | १ | ४ | १५ |
| स त्वं नो अग्नेऽवमः .. .. .. | १ | ७ | ९ |
| स त्वं नो अग्नेऽवमः .. .. .. | १ | ८ | १४ |
| स त्वं नो अग्नेऽवमः .. .. .. | २ | ४ | १० |
| स त्वं नो अग्नेऽवमः .. .. ... | २ | २२ | १७ |